भवतु श्रवणादेव विवेकज्ञानम्। अनेकजन्मायाससाध्येना[1]परोक्षज्ञानेन किमित्यत आह ॥

युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ॥५९॥

व्यक्तम् ॥

प्रकृत्यादयः सन्ति, ते च महदादिक्रमेण परिणमन्त इति न दृष्टमित्यत आह ॥

अचाक्षुषाणामनुमानेन बोधो, धूमादिभिरिव वह्नेः ॥ ६० ॥

भवेदेवं, यदि प्रत्यक्षमेव प्रमाणं, नानुमानादिकमिति। प्रकृत्यादीनामदर्शनेऽपि सामान्यतोदृष्टानुमानात्सिद्धेः ॥

प्रकृत्यादीनां सृष्टिक्रममाह ॥

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान्महतोऽहंकारो,ऽहंकारात्पञ्च तन्मात्राणि, उभयमिन्द्रियं, [2]स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः ॥ ६१ ॥

---

१ C ॰साध्येन। २ Only B inserts तन्मात्रेभ्यः, as Vijñâna, Nâgeśa and Mahâdeva; cf. Aph[3]. 71, note 1.

यद्यपि त्रयाणां साम्यावस्था प्रकृतिस्तथाप्येकैकस्मिन्नपि प्रकृतिशब्दप्रयोगः सांकेतिकः। महानिति बुद्धितत्त्वम्। अहंकार इत्यभिमानः। पञ्च तन्मात्राणीति शब्दस्पर्शरूपरसगन्धाः। उभयमिन्द्रियं, बाह्यं पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्च बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि, आन्तरं मनः। स्थूलभूतानि आकाशवायुतेजोजलभूमयः। तेषां च[1] पञ्चतन्मात्रेभ्य उत्पत्तिरिति बोद्धव्यम्। स्थूल इत्युपलक्षणं[2], सूक्ष्मभूतानामपि ग्रहणम्। पुरुष इति संख्यापूरणार्थं, न तु सृष्टिक्रमार्थं, नित्यत्वादात्मनः॥

कार्यात्कारणानुमानार्थं[3] प्रातिलोम्यमाह[4]॥

लघुत्वादिगुणयोगात्सत्त्वादित्रयं द्रव्यम्। तत्र गुणशब्दस्तु पुरुषोपकरणत्वात्। तदेव प्रकृतिर्न तु तदाधारवस्त्वन्तरं, 'सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादिति' वक्ष्यमाणत्वात्। साम्यावस्था न्यूनाधिकभावेनासंहननं, अकार्यावस्थत्वमित्यर्थः। एवं च कार्यभिन्नं गुणत्रयं प्रकृतिरिति पर्यवसितो ऽर्थः। इदं च मूलप्रकृतिलक्षणम्। तत्त्वान्तरोपादानत्वं प्रकृतित्वमिति सामान्यलक्षणम्॥

अनुमानक्रममाह सूत्रैः॥

---

१ च is missing in C। २ C स्थूलमि॰। ३ B ॰नुमानं।
४ A प्रतिलोमानाह, B प्रातिलोम्येनाह।

स्थूलात्पञ्चतन्मात्रस्य ॥ ६२ ॥

स्थूलात् पञ्चभूतात्कार्यात्सत्त्वरजस्तमोभेदेन शान्तघोरमूढरूपात्पञ्चतन्मात्रस्य ज्ञानम् ॥

बाह्याभ्यन्तराभ्यां तैरहंकारस्य[1] ॥ ६३ ॥

बाह्याभ्यन्तराभ्यामिन्द्रियाभ्यां तैः पञ्चतन्मात्रैश्च[2] कार्यैरहंकारस्य ज्ञानम् ॥

तेनान्तःकरणस्य ॥ ६४ ॥

तेनाहंकारेण कार्येणान्तःकरणस्य बुद्धेर्ज्ञानम् ॥

ततः प्रकृतेः ॥ ६५ ॥

ततो महत्तत्त्वात्कार्यात्प्रकृतेर्ज्ञानम् ॥

संघातपरार्थत्वात्पुरुषस्य[3] ॥ ६६ ॥

न प्रकृतेः कार्यत्वात्पुरुषस्य ज्ञानं, प्रकृतेर्नित्यत्वात् पुरु-

---

१ Vijñâna, Nâgeśa and Mahâdeva तैस्त्वाहंकारस्य। २ A C ०मात्रैः। ३ A C संहत०, as Vijñâna, Nâgeśa and Mahâdeva। ४ B ०पुरुषार्थस्य।

षस्याकारणत्वात्[1]। किं तु प्रकृतेः संघातत्वात् त्रिगुणात्मकत्वात् परार्थत्वम्। परश्च पुरुषः। अतस्तस्य ज्ञानम्। स चासंहतो वक्तव्यः, अनवस्थाभयात्॥

अथ प्रकृतेः कारणं भविष्यतीत्यत आह॥

मूले मूलाभावादमूलं मूलम्॥ ६७॥

मूलप्रकृतेर्मूलाभावात् कारणाभावात् अमूलं यत्कारणं तन्मूलम्। सा प्रकृतिः॥

अत्र युक्तिमाह॥

पारंपर्ये ऽप्येकत्र परिनिष्ठेति संज्ञामात्रम्॥ ६८॥

प्रकृतेरन्यत्कारणं, तस्याप्यन्यत्कारणमित्यनवस्थादोषादन्ततो ऽकारणं [2]मूलं वक्तव्यम्। सैव प्रकृतिरिति। पञ्चविंशतितत्त्वाद[3]धिकाङ्गीकारे च गौरवं स्यात्॥

प्रकृते[4]रप्रत्यक्षत्वा[5]त्कथं कारणत्वावगम इत्यत आह[6]॥

समानः प्रकृतेर्द्वयोः॥ ६९॥

---

१ B पुरुषाकारणत्वात्, C पुरुषस्यातत्कारणत्वात्। २ A inserts सर्वं। ३ B omits ०द०। ४ A C insert ०प्य०। ५ A C insert ०त्त०। ६ B इत्याह।

द्वयोर्वादिप्रतिवादिनोस्तुल्यत्वम्। यथा परमाणोरप्रत्यक्षत्वे ऽपि घटादौ तद्गुणदर्शनात्परमाण्वनुमानं, तथाचापि जगतस्त्रैगुण्यदर्शनात्कारणं प्रकृतिस्त्रिगुणात्मिकेत्यनुमीयते। तथा हि, कामिनी भर्तुः सुखदेति सात्त्विकी, अविनयाद्दुःखदेति राजसी, विरहान्मोहदेति तामसी। एवं सर्वे भावा द्रष्टव्याः॥

यदि विवेक[१]दर्शनान्मुक्तिस्तदा शास्त्रश्रवणादेव मुक्तिः स्यात्। न चैवं, कस्यापि क्षिप्रं कस्यापि चिरेणेति दर्शनादित्यत आह॥

**अधिकारित्रैविध्यान्न नियमः॥७०॥**

अधिकारिणस्त्रिविधा भवन्ति, उत्तममध्यमाधमभेदात्। तद्भेदः सहकारिणो ऽविद्यादेर्भेदात्[२]। तद्भेदश्चादृष्टभेदात्[३]। तेन[४] श्रवणमात्रादिति न नियमः॥

पूर्वं 'प्रकृतेर्महानिति' सूत्रे कार्यकारणभावः प्रतिपादितः, न तु क्रम इति भ्रमं निराकरोति॥

**महदाख्यमाद्यं कार्यं, तन्मनः॥७१॥**

१ B विवेकपुरुष°, C पुरुषविवेक° instead of the simple विवेक°। २ B ऽविपर्ययादेर्भेदात्। ३ This sentence is omitted in B। ४ B तत्र।

प्रकृतेराद्यं[1] कार्यं, तन्महत्तत्त्वं बुद्धिः मननान्मन इति ॥

चरमो ऽहंकारः ॥ ७२ ॥

अनन्तरं बुद्धेः कार्यमहंकारः ॥

तत्कार्यत्वमन्येषाम्[2] ॥ ७३ ॥

अहंकारकार्यत्वमन्येषां एकादशेन्द्रियाणां पञ्चतन्मात्राणाम् । पारंपर्येण तन्मात्रकार्याणामपि भूतानां तत्कार्यत्वमित्युक्तम् ॥

ननु यद्येवं, प्रधानकार्यं जगदिति सिद्धान्तहानिरित्यत आह ॥

आद्यहेतुता तद्द्वारा[3] पारंपर्ये ऽप्यणुवत्[4] ॥ ७४ ॥

यथा मृत्पिण्डकार्यस्य घटस्य पारंपर्येण परमाणुकारणता, तथा प्रकृतेरपि मूलकारणता[5] ॥

प्रकृतिपुरुषयोर्नित्यत्वात् सृष्ट्यादौ कस्य कारणत्वमित्यत्राह ॥

---

१ A °राद्य । २ Thus Aniruddha, Mahâdeva and Nâgeśa; Vijñâna has °मुत्तरेषाम् । ३ A C आद्यहेतुद्वारा । ४ B पारंपर्ये ऽप्यणुवत्, as the three other commentators । ५ तथा°°कारणता is missing in A ।

पूर्वभावित्वे[1] द्वयोरेकतरस्य हानेनान्यतरयोगः[2] ॥७५॥

न[3] पूर्वभावित्वमात्रेण कारणत्वं, किं त्वन्वयव्यतिरेकाभ्याम्। द्वयोर्मध्य एकस्य पुरुषस्य कारणत्वयोग्यता[4]-हानिरविकारित्व[5]श्रुतेः। अतो ऽन्यतरस्य प्रधानस्य कारणत्वयोगः॥

अविवादात्परमाणूनामेव कारणत्वमस्त्वित्यत[6] आह॥

परिच्छिन्नत्वान्न[7] सर्वोपादानम्॥७६॥

यत्परिच्छिन्नं न तत्सर्वोपादानं, यथा न तन्तुर्घटस्य कारणम्। तस्मात्पदार्थानां पृथक्पृथक्[8] कारणं वक्तव्यम्। एककारणत्वे च[9] लाघवं स्यादिति॥

अत्र[10] श्रुतिं दर्शयति॥

---

१ A C पूर्वाभावित्वे। २ Thus only Aniruddha; the three other commentators read द्वयोरेकतरस्य हाने ऽन्यतरयोगः; cf. Aph[3]. 91, note 3। ३ A ननु। ४ A कारणत्वं, C कारणत्वे। ५ A ०रधिकारित्व०, C ० निर्विकारित्व०। ६ B ०स्त्वीत्यत। ७ Thus only Aniruddha; the three other commentators have परिच्छिन्नं न। ८ B omits one पृथक्। ९ A ०कारणतामाह, by omitting the following text as far as जगत्कारणतामाह in the commentary to Sûtra 77। १० B श्रुति।

तदुत्पत्तिश्रुतेश्च[1] ॥ ७७ ॥

युक्तिस्तावत्प्रोक्ता[2]। श्रुतिरपि प्रधानस्य जगत्कारणतामाह 'प्रधानाज्जगज्जायत' इति ॥

प्रागसतो घटस्य भवनं दृश्यते। नियतपूर्वभावित्वात्प्रागभावः कारणमस्त्वित्यत आह ॥

नावस्तुनो वस्तुसिद्धिः ॥ ७८ ॥

नाभा[3]वाद्भावोत्पत्तिः। कारणरूपं कार्यं दृश्यत इति जगतोऽप्यवस्तुत्वम् ॥

भवतु जगदप्यवस्तु, का नो हानिरित्यत आह ॥

अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ॥ ७९ ॥

शुक्तौ रजतज्ञाने 'नेदं रजतमिति' ज्ञानाद्रजतबाधः। न चात्र 'नेदं भावरूपं जगदि'ति[4] कस्यापि ज्ञानमिति, येन भावरूपबाधः स्यात्। दुष्टकारणजन्यत्वाच्च मिथ्येत्यवं[5]गम्यते, यथा[6] कामलादिदोषात्पीतशङ्ख-

१ C ०श्रुतेः। २ C ०दुक्ता। ३ B यद्यभा०। ४ B जगत्। ५ A मिथ्येत्येव। ६ B तथा, and कांच is inserted before कामला०।

ज्ञानं कस्यचित्। अत्र च जगज्ज्ञानस्य सर्वेषां सर्वदा सत्यत्वाच्च न दोषो ऽस्ति। तस्मान्नावस्तु जगदिति॥

नन्वभावः[1] कारणमस्तु[2], तथाप्यभावत्वं न जगतो भविष्यति, तत्राह॥

भावे तद्योगेन तत्सिद्धिरभावे तदभावात्कुतस्तरां तत्सिद्धिः॥ ८०॥

भावे उपादानकारणे[3] 'कारणगुणः कार्यं[4]' इति तद्योगेन[5] भावयोगेन[6] तत्सिद्धिः कार्यस्य वस्तुत्वसिद्धिः। अभावे जगतो ऽभावत्वे तदभावाज्जगदभावस्यावश्यंभावात् कुतस्तत्सिद्धिरिति, अभावस्याभावरूपत्वात्[7]॥ कर्मैव जगत्कारणमस्तु, किं प्रधानकल्पनयेत्यत आह॥

तरप् स्वार्थे॥

न कर्मण[8] उपादानायोगात्[9]॥ ८१॥

---

१ C नन्वभावत्वा। २ A C कारणं वस्तुनो, and the following तथाप्यभावत्वं न is omitted। ३ C उपादाने। ४ B कारणात्कार्यं। ५ A तद्योगेना। ६ is omitted in B। ७ C अभावात् in place of अभावस्या००पत्वात्। ८ A B कर्मणा। ९ Vijñâna has उपादानत्वायोगात्।

निमित्तकारणमदृष्टमस्तु[१], धर्माधर्मयोस्तूपादानकारणत्वं न क्वचिद्दृष्टम्। प्रकृतिपुरुषविवेकदर्शनान्मुक्तिरिति प्रकृतिस्वीकारः ॥

[२]वेदोक्तार्थानुष्ठानादेव मुक्तिसंभवात्[३] किं प्रकृत्येत्यत आह ॥

**नानुश्रविकादपि तत्सिद्धिः, साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ॥ ८२ ॥**

वेदादनुश्रूयत इत्यानुश्रविको यागादिः[५]। तस्मादपि न मोक्षसिद्धिः, साध्यत्वेनावृत्तियोगात्। [६]कार्यत्वेनानित्यत्वान्मुक्तस्य पुनःसंसारानुवृत्तियोगः। तस्मादपुरुषार्थत्वम् ॥

पुरुषार्थत्वं दर्शयति ॥

**तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ॥ ८३ ॥**

तत्र प्रकृतिपुरुषयोः प्राप्तविवेकस्य विवेकज्ञानादनावृत्तिश्रुतिः। 'न स पुनरावर्तते' इति श्रुतिः[८] ॥

---

१ ०मदृष्ट० is missing in B, A ०णं नादृष्टमस्तु। २ Aph.[3] 98 begins the sentence with ननु। ३ C मुक्तेः। ४ A C ०श्रा०। ५ A योगादिः। ६ C inserts क्रिया। ७ B संसारावृत्ति०। ८ This sentence is missing in A।

विपक्षे दोषमाह ॥

तत्र ब्रह्मलोके । न स पुनरावर्तते इति श्रुतिः ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यत्र कृतात्मान इत्यस्य स्वरसात् ॥

कीदृक्तर्हि फलं कर्मणः, तदाह ॥

## दुःखाद्दुःखं, जलाभिषेकवन्न जाड्यविमोकः ॥ ८४ ॥

यदि कर्मसाध्यो मोक्षो भवेत्, कर्मणो[१] दुःखबहुलत्वात्तत्कार्यो मोक्षोऽपि दुःखबहुलः स्यात् । अन्ततः क्षयित्वेनापि दुःखं स्यात् । नहि जाड्यार्तस्य[२] जाड्यविमोक्षो जलाभिषेकात्,[३] प्रत्युत जाड्यमेवेति ॥

दुःखस्य कर्मसाध्यत्वमप्रयोजकं, किं तु काम्यकर्मसाध्यत्वं हेतुः, निष्कामकर्मणो मोक्षसाधनत्वात् । तथा[४] च श्रुतिः

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः ।

---

१ A कर्मणा । २ जाड्यार्तस्य is missing in A । ३ B ०भिषेकवत् । ४ A यथा ।

अथापरे ऋषयो[1] मनीषिणः परं[2] कर्मभ्यो ऽमृतत्वमानशुरित्यत्राह[3] ॥

काम्याकाम्ये[4] ऽपि साध्यत्वाविशेषात् ॥ ८५ ॥

मा भून्निष्कामकर्म[5]साध्यं[6] दुःखं, तथापि काम्यानिष्कामकर्म[7]विशेषे ऽपि मोक्षस्य कर्मसाध्यत्वमविशिष्टम्[8]। [9]साध्यत्वात् क्षयित्वेन[10] पुनरपि दुःखं स्यात्। निष्कामकर्मणो मोक्षसाधनत्वश्रुतिश्च[11] ज्ञानार्थं[12], ज्ञानाच्च मोक्ष इति पारंपर्येण मोक्षसाधनत्वम् ॥

यदि प्रकृतिपुरुषविवेकज्ञानान्मोक्षो भवेत्, तथापि क्षयित्वात्पुनरपि संसार इति वादिप्रतिवादिनोस्तुल्यत्वमिति, तत्राह ॥

निजमुक्तस्य बन्धध्वंसमात्रं परं, न समानत्वम्[13] ॥८६॥

निजमुक्तस्य स्वभावमुक्तस्य बन्धध्वंसः। बन्धो ऽवि-

१ ऋषयो is missing in B। २ A पर। ३ B ०त्याह। ४ Thus only Aniruddha, the other commentators have काम्ये ऽकाम्ये। ५ कर्म is omitted in A C। ६ A C ०साध्ये। ७ कर्म is missing in B। ८ B ०त्वमनिष्टं। ९ C inserts न। १० A तत्क्षयित्वेन, C स क्षयित्वेन। ११ A B ०श्रुतिः। १२ A अज्ञानार्थं। १३ B समत्वं।

वेकः, तद्विरोधेना[1]विवेकध्वंसो[2] नाशः। अविवेकनाशस्य[3] च प्रध्वंसत्वात्[4] कुतः संसारस्य पुनरावर्तनमिति समानत्वम्[5] ॥

पञ्चविंशतिर्गण इत्युक्तं, तत्सिद्धिश्च न प्रमाणेन विनेति। तद्दर्शयति ॥

द्वयोरेकतरस्य [6]चाप्यसंनिकृष्टार्थपरिच्छित्तिः प्रमा। तत्साधकतमं यत्तत् ॥ ८७ ॥

'द्वयोरि'तीन्द्रियार्थयोर्विद्यमानयोः प्रत्यक्षे। 'एकतरस्य चापी'ति विद्यमानस्य लिङ्गस्य शब्दस्य वाँनुमाने शब्दे च। 'असंनिकृष्टार्थपरिच्छित्तिरि'ति अप[8]रिच्छिन्नार्थपरिच्छित्तिः प्रमा प्रमितिः फलम्। एतेनानधि[9]गतार्थगन्तृप्रमाणमित्युक्तम्। प्रमासाधकतमं यत्तत्प्रमाणमिति प्रमाणसामान्यलक्षणम् ॥

कति प्रमाणानीत्यत आह ॥

---

१ C तस्य विरोधिनोर०। २ A ०कविध्वंसो, C ०कात् ध्वंसो। ३ A अपि ते कर्मणि अस्य, C अपि ते कर्मणि वित्तस्य। ४ A C प्रध्वंसात्। ५ B समत्वं। ६ B वाप्य०, the reading of Vijñâna and Mahâdeva; Nâgeśa has वासं०, cf. Aph.[3] 104, note 2। ७ A चा०। ८ अपरिच्छिन्नार्थ० is missing in B। ९ B ०व० in place of ०धि०।

त्रिविधं प्रमाणम्[1] । तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ॥ ८८ ॥

प्रत्यक्षानुमानशब्दाः प्रमाणानीति । किमुपमानार्थापत्त्यभावसंभवैतिह्यानि न स्युरिति । अत्रोक्तं 'तत्सिद्धावि'त्यादि । प्रमेयव्यवस्थार्थं[2] प्रमाणस्वीकारः । त्रिविधप्रमाणसिद्धौ सर्वप्रमाणानां प्रमेयव्यवस्थासिद्धेर्नाधिक्यसिद्धिः पृथक्प्रमाणत्वेन, त्रिविधप्रमाणेष्वेषामन्तर्भावादिति । इन्द्रियार्थसंनिकर्षान्वयव्यतिरेकादिना यथायथं प्रत्यक्षादिषु सूरिभिरन्तर्भावितत्वात्[3] केवलमधिकः संज्ञाभेदः कृत इति नाधिकत्वेन प्रमाणसिद्धिः ॥

विशेषलक्षणमाह ॥

यत्संबन्धसिद्धं[4] तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ॥ ८९ ॥

'यत्संबन्धसिद्धमि'त्यनुमानशब्दौ व्यवच्छिन्नौ[5] । तदाकारोल्लेखि घटाकारोल्लेखि । तत्प्रत्यक्षम् । सविकल्प-

---

१ "So reads Aniruddha; but Vijñâna, Nâgeśa and Vedânti Mahâdeva end the eighty-seventh Aphorism with these two words" Aph.[3] 106 । २ B °व्यवहारार्थं । ३ B °र्भावित्वात् । ४ Thus only Aniruddha; the three others have यत्संबद्धं सत् । ५ A व्यवस्थितौ । ६ B पटा° ।

कमपि[1] प्रत्यक्षं संगृहीतम्। बौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमिति[2] वर्णयन्ति, कल्पनापोढमभ्रान्तं प्रत्यक्षमिति। ना[3]मजात्यादियोजनात्मिका प्रतीतिः कल्पना, सा च सविकल्पके[4] ऽप्यस्तीति न प्रत्यक्षं प्रमाणम्। तन्न। अदुष्टसाक्षात्कारि[5]प्रमाजनकसामग्रीजनितं प्रत्यक्षम्। तदुभयं, निर्विकल्पकं सविकल्पकं च। किं तु सादृश्यात्संस्कारोद्बोधद्वारेण स्मृत्या नामजात्यादिसंविदुत्पद्यते। अत एवाधिकप्राप्त्या सविकल्पकमिति विशेषसंज्ञा। न च स्मृत्या कश्चिद्दोषः सामग्रीप्रत्यवायो[6] वा जनितः॥ अथ स्मृत्या सहितत्वान्न[8] प्रमाणम्। अहो नैपुण्यं, यत्सहकारि प्रामाण्यं बाधते[9]। तथा च,

संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं[10] न बाधते।
संज्ञिनः सा तटस्था[11] हि[12] न रूपाच्छादन[13]क्षमा॥
ततः परं पुनर्वस्तु धर्मैर्[14]जात्यादिभिर्यया।
बुद्ध्यावसीयते[15] सापि प्रत्यक्षत्वेन संमता॥

---

१ A विकल्पमिति। २ B प्रमाणं। ३ A inserts here ०कमपि प्रत्यक्ष०। ४ B सविकल्पे। ५ B ०री०। ६ A C ०प्रत्ययो। ७ B व्यवहि०। ८ ०न्न is missing in C। ९ A बोधते। १० A प्रत्यक्षं। ११ A तथावस्था। १२ हि is missing in A। १३ A inserts here व्यापकत्वान्नेदं। १४ A धर्मो जा०। १५ B ०वसाया।

योगिप्रत्यक्षाव्यापकत्वान्नेदं प्रत्यक्षलक्षणमित्यत आह ॥

योगिनामबाह्यप्रत्यक्षत्वान्न दोषः ॥ ९० ॥

बाह्यप्रत्यक्षलक्षणमिदं लौकिकं, योगि[1]प्रत्यक्षं त्वबाह्यमलौकिकं च[2]। अतो नाव्यापकत्व[3]दोषः ॥

अथवानेन लक्षणेन योगिप्रत्यक्षस्यापि संग्रह इति पक्षान्तरमाह ॥

लीनवस्तुलब्धातिशयसंबन्धान्न दोषः[4] ॥ ९१ ॥

सत्कार्यस्थितेर्नष्टमपि स्वकारणे लीनं[5] भूतत्वेनास्ति,[6] भविष्यदपि स्वकारणेऽनागतत्वेनास्ति। योगजधर्मानुग्रहाल्लब्धातिशयस्य योगिन एव प्रधान[7]संबन्धात्सर्वदेशकालादिसंबन्ध इति नाव्यापकत्वदोषः[8] ॥

ईश्वरप्रत्यक्षस्यालक्षणमित्यत आह ॥

---

१ C योग०। २ B वा। ३ C ०त्वं। ४ Mahâdeva and Vijñâna have ०न्धाद्वादोषः, Nâgeśa ०न्धाद्वा न दोषः। ५ A लीन। ६ A C insert here वस्तु वस्तुत्वेन। ७ B प्रधानं। ८ B ०पकत्वादिदोषः, C ०पकत्वं दोषः।

ईश्वरासिद्धेः ॥ ९२ ॥

यदीश्वरसिद्धौ प्रमाणमस्ति, तदा तत्प्रत्यक्षचिन्तोपपद्यते। तदेव तु[1] नास्ति। क्षित्यादि सकर्तृकं कार्यत्वादिति प्रमाणमस्तीति चेत्, स किं शरीरी अशरीरी वे[2]त्युभयथापि कर्तृत्वासंभवात्, विशेषवादिनां कार्यत्वस्याभासत्वात्[3]। एतदन्यत्र बहु प्रपञ्चितम् ॥

युक्त्यन्तरमाह[4] ॥

मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ॥ ९३ ॥

स किं बद्धो वा मुक्तो वा। बद्धस्य धर्माधर्मयोगान्नेश्वरत्वम्। मुक्तस्य ज्ञानचिकीर्षाप्रयत्नाभावान्न कर्तृत्वमिति नेश्वरसिद्धिः। अथान्य एवासौ जीवन्मुक्त इति। एवं, तर्हि दृष्टान्ताभावादसाधारणत्वम् ॥

एतदेवाह ॥

उभयथाप्यसत्करत्वम् ॥ ९४ ॥

उक्तव्याख्यानमेतत्सूत्रम् ॥

---

१ A तु, B omits the word। २ वे is missing in A। ३ B °स्याभावात्। ४ A अयुक्तरमाह, C प्रयुक्तरमाह।

एवं, तर्हि 'स हि सर्ववित्सर्वस्य कर्ते'त्यादिश्रुतिबाधः स्यादित्यत्राह ॥

सृष्टिकर्तृ[१]त्वेनैव हीश्वरः साध्यते परैः । व्याख्यानात्सृष्टिपरः सच्छब्दो ऽत्र बोध्यः ॥

मुक्तात्मनः प्रशंसा, उपासा[२]सिद्धस्य[३] वा[४] ॥ ९५ ॥

रागाद्यभावान्मुक्तात्मन इव मुक्तात्मनः, न तु मुक्तस्य, तस्य संकल्प[५]कर्तृत्वाद्यभावात् । तत्प्रशंसा विधिवाक्योत्तम्भनाय[६]। 'उपासा[७]सिद्धस्य वेति[८]' उपासनया लब्धातिशयस्य योगिनो ऽणिमादिसिद्धस्य प्रशंसाभ्यासोत्तम्भनायेति ॥

चेतनाधिष्ठानं विना नाचेतनं प्रवर्तत इत्यतो ऽपि नेश्वरसिद्धिरित्याह[९] ॥

---

१ ०कर्तृ० is missing in a । २ Mahâdeva and Nâgeśa have प्रशंसोपा० ; A inserts विधिं (sic) वाक्योत्तम्भनाया after प्रशंसा । ३ A उपासना०, C उपास्या० । ४ A वेति । These peculiar readings of A are caused by an oversight of the copyist who intermixed the text of the Aphorism with the first two sentences of the commentary । ५ C सकल० । ६ These two sentences are altogether omitted in A ; cf. note ४ ; the following sentence is missing in B । ७ C उपासना० । ८ वेति is missing is Aph.[3] 115, note 4 । ९ A ०रित्यत आह ।

केचिच्छ्रुतिस्मृती मुक्तात्मनः केवलात्मनो ज्ञेयताविधानाय तस्य संनिधिमात्रेणैश्वर्येण स्तुतिरूपे। केचिच्च उपासनासिद्धस्यानित्येश्वरस्यैव नित्यत्वाद्युपासनासिद्धये गौणनित्यत्वादिना स्तुतिरूपे ॥

अधिष्ठातृत्वं कीदृशं, तदाह ॥

तत्संनिधानादधिष्ठातृत्वं मणिवत् ॥ ९६ ॥

यथा प्रतिबिम्बितशरीरे मणौ चलत्यचलति शरीरे 'शरीरं चलती'त्यभिमानः, तथा तत्संनिधानात्प्रकृतिप्रतिबिम्बितत्वादात्मनः[१] प्रकृतेः कर्तृत्वं भोक्तृत्वं[२]मधिष्ठातृत्वमात्मनो ऽभिमन्यते। तस्माच्चेतनो ऽधिष्ठातेति भ्रान्तिरिति। तथा च

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः[३]।
अहंकारविमूढात्मा 'कर्ताहमिति' मन्यते ॥

यदि न चेतनाधिष्ठातृत्वं, मृतशरीरस्याहारादिक्रिया स्यादित्यत आह ॥

विशेषकार्ये ऽपि[४] जीवानाम् ॥ ९७ ॥

---

१ A ०दात्म, C ०दात्मा। २ भोक्तृत्वं is missing in B। ३ B C नित्यशः। ४ So reads Aniruddha only; the three other commentators have ०कार्येष्वपि।

वायुयुक्तो बुद्ध्यादिर्जीवः, न त्वात्मा जीवः । आहारादिविशेषकार्ये ऽपि जीवानामेव कर्तृत्वं, आत्मनो[१] ऽपरिणामित्वात् ॥

आत्मनि चेज्ज्ञानं नास्ति, कथं [२]ज्ञानायोपदेश इत्यत्राह ॥

सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ॥ ९८ ॥

उत्तरसूत्रस्था[३]न्तःकरणस्येति पदम[४]नुषजनीयम्[५] । [वाक्यार्थोपदेशो ऽन्तःकरणस्येत्यन्तमेकं सूत्रं वा][६] । तेनायमर्थः । सिद्धरूपबोद्धृत्वात् तात्त्विकरूपबोद्धृत्वान्महतो ऽन्तःकरणस्य वाक्यार्थोपदेशः । तत्प्रतिबिम्बितत्वाच्च[७] पुरुषस्य बोद्धृत्वाभिमानः ॥

एतदेव[८] स्पष्टयति ॥

[९]अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम् ॥ ९९ ॥

---

१ C नात्मनो । २ C inserts आदि । ३ ०स्था० is corrected; the MSS. have ०स्या० or ०स्रा० । ४ A ०ति तदम०, B ०तीदम० । ५ B ०मावर्तनीयम् । ६ This parenthesis is only found in A । ७ C ०तत्वात् । ८ A ०देवं । ९ The remark Aph.[3] 121, note 1, is not confirmed by my MSS. ।

अन्तःकरणस्य बुद्धौ पुरुषच्छायापत्त्या तच्चैतन्येनोज्ज्वलितस्य चेतनत्वाभिमानादधिष्ठातृत्वम्। 'लोहवदि'ति यथाकर्षको लोहो[2] निष्क्रियोऽपि संनिधिमात्रेणाकर्षति[3] ॥

अनुमानलक्षणमाह ॥

अग्निसंयोगविशेषेण यथा लोहमुज्ज्वलितं तद्वत्प्रतिबिम्बहेतुसंयोगविशेषेण चेतनोज्ज्वलितत्वाच्चेतनायमानस्यान्याचेतनेभ्यो विलक्षणस्यान्तःकरणस्य संकल्पादिद्वारकमनुपचरितमधिष्ठातृत्वमित्यर्थः। आदिसर्गस्त्वबुद्धिपूर्वक इति न तत्र मुख्याधिष्ठातुरपेक्षा। अत एव कौर्मे

इत्येष प्राकृतः सर्गः संक्षेपात्कथितो मया।
अबुद्धिपूर्वकस्त्वेष ब्राह्मीं सृष्टिं निबोधतेति ॥

'तदैक्षते'त्यादि तु 'कूलं पिपतिषती'त्यादिवत्कार्योन्मुखत्वमादाय कथंचिन्नेयमिति भावः ॥

प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम् ॥ १०० ॥

अविनाभावदर्शिनो व्याप्यज्ञानादनु व्यापकज्ञानमनुमानम्। अनेनान्वयी व्यतिरेकी[4] अन्वयव्यतिरेकी[5]

१ B ०तन्योपज्ज्व०। २ AC लोहाग्नि०। ३ AB ०णाकर्षयति। ४ B inserts here a few sentences taken from Vijñâna's commentary। ५ अन्वयव्यतिरेकी is omitted in C।

पूर्ववच्छेषवत्सामान्यतो दृष्टं चेति संगृहीतम्। वादिनामपि लक्षणान्यत्रैवान्तर्हितानीति। तथा च

अनुमेयेन संबद्धं[१] प्रसिद्धं च तदन्विते।
तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥

शब्दं लक्षयति॥

प्रतिबन्धो व्याप्तिः। तद्युक्तं तन्निरूपकं च प्रतिबद्धम्॥

आप्तोपदेशः शब्दः॥ १०१॥

आप्तोपदेशः शब्दः, न त्वाप्तेन कृतः, अपौरुषेयत्वाद्वेदस्य। अपौरुषेयत्वं च पञ्चमाध्याये 'न पौरुषेयत्वमि'ति सूत्रे[२] प्रतिपादयिष्यामः। शब्द इति कारणकथनं[३], फलं तु शब्दजन्यं ज्ञानं शब्दः, कार्ये कारणोपचारात्[४]। शाक्यादिवाक्यानां[५] वेदविरोधेनायुक्तत्वादाभासत्वम्॥

प्रकृतिपुरुषविवेकार्थं शास्त्रारम्भः। न च तयोः सिद्धौ प्रमाणमस्तीत्यत आह॥

---

१ A संबंधं। २ C चेत्। ३ C कथन। ४ B adds युक्त इति। ५ A षा०, C वा०। ६ C ०वादानां। ७ B ०न० instead of ०ना०।

उभयसिद्धिः प्रमाणात्तदुपदेशः ॥ १०२ ॥

वक्ष्यमाणात्प्रमाणात्प्रकृतिपुरुषयोः सिद्धिर्ज्ञानम्। तस्मात्तद्विवेकार्थमुपदेशो[१] युक्त इति ॥

किं तत्प्रमाणमित्यत्राह[२] ॥

सामान्यतो दृष्टादुभयसिद्धिः ॥ १०३ ॥

प्रकृतेर[३]प्रत्यक्षत्वात्[४] यत्कार्यं तत्कारणगुणपूर्वकं[५], कार्यं च त्रिगुणात्मकमिति सामान्येन प्रकृतिसिद्धिः। आत्मनो ऽप्रत्यक्षत्वे ऽपि यत्संहतं तत्परार्थमित्यसंहतः परः सिद्धः। वक्ष्यति च 'संहतपरार्थत्वात्' ॥

प्रकृतेर्नित्यत्वात्प्रवृत्तिशीलत्वाच्च सर्वदा भोग इत्यनिर्मोक्षः स्यादित्यत आह ॥

चिदवसानो भोगः ॥ १०४ ॥

चित् आत्मा। तद्विवेकावसानो भोगः। यथानादिरपि प्रागभावो नश्यति, तथा नित्यायाः प्रकृतेर्विवेकज्ञानपर्यन्तः[६] प्रसवः[७] ॥ अथाभाव एवं[८], न तु भाव

---

१ B ०देश। २ A ०त्यत आह। ३ B ०ति०। ४ B ०प्रत्यक्षात्। ५ पूर्वकं is missing in B। ६ A C ०पर्यंतं। ७ B प्रसरः। ८ A एव।

इति । न, अत्राभावत्वं न प्रयोजकं, प्रध्वंसाभावेऽतथादर्शनात् । अथ यथादर्शनं[१] व्यवस्था, अत्रा-प्येवम् ॥

यदि कर्तृ[२] प्रधानं भोक्ता पुरुषः, अन्यकृतकर्मणो[३]ऽन्यो भोक्तेति स्यादित्यत आह ॥

अकर्तुरपि फलोपभोगोऽन्नाद्यवत् ॥ १०५ ॥

यथा[४] सूपकारस्यान्नादिकर्तृत्वमकर्तुरीश्वरस्य फलोपभोक्तृत्वं[५], तथात्रापि । अथोद्देश्यत्वेन कर्तृत्वमीश्वरस्य । अत्राप्यात्मोद्देश्यत्वेन प्रकृतेः प्रसव[७] इति ॥

व्यवहारसिद्धान्तमुक्त्वा स्वसिद्धान्तमाह[८] ॥

अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः[१०] ॥१०६॥

न पुरुषः कर्ता न भोक्ता, किं तु महत्तत्त्वप्रतिबिम्बितत्वात्कर्तृत्वाभिमानः[११] । 'अविवेकाद्वेति'[१२] प्रकृति-

१ B ०दर्शन । २ A C कर्ता । ३ B ०कर्मणा । ४ A यदि । ५ Aph.[3] 128, note 1, ०भोक्तृत्वे । ६ A ०परे० instead of ०द्दे० । ७ B प्रसर । ८ B has, as Avatârana, व्यवहारसिद्धान्तमाह । ९ A अविवेकात्त० । १० A ०गतः । ११ C ०मानात् । १२ C अविवेकादिति ।

पुरुषयोर्विवेकाग्रहात्। तत्सिद्धेः कर्तुः फलोपभोगा[1][2]भिमानसिद्धेरिति ॥

एतद्व्यतिरेकमाह ॥

अथवा अविवेकात्पुरुषस्य कर्तृत्वसिद्धिः। ततः कर्तुः पुरुषस्य 'य एव कर्ता स एव भोक्ते'ति कर्मफलावगमः ॥[3]

नोभयं च तत्त्वाख्याने ॥ १०७ ॥

विवेकात्तत्त्वज्ञाने नोभयं न कर्तृत्वं न भोक्तृत्वमिति ॥

प्रमाणमुक्त्वा प्रमेयव्यवस्थामाह ॥

विषयो ऽविषयो[4] ऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य ॥ १०८ ॥

इन्द्रियस्य उपादानात् संबन्धात् विषयः[5]। इन्द्रियस्य हानात् संबन्धाभावात् अविषयः। असंबन्धश्चातिदूरादेरयोग्यत्वात्[6] ॥ अतिदूराद्वियति[7][8] पक्षी नोप-

१ B फलभो०। २ A ०गो०। ३ These two sentences are only found in a। ४ ऽविषयो is omitted in A। ५ C adds here अनुमानादपि पारंपर्येण विषयः। ६ अयोग्यत्वात् is missing in C, and so is the whole of the two last sentences in A। ७ अति is omitted in B। ८ A ०द्विषयति।

लभ्यते, अतिसामीप्याल्लोचनस्थाञ्जनं, व्यवधानात्कुड्यस्थं वस्तु, मनोऽनवस्थानाच्छोकादिग्रस्तस्य[१] पार्श्वस्थवस्त्वग्रहणं, सौक्ष्म्यादणोः, अभिभवान्मर्दलध्वनिना शङ्खध्वनिरित्यादिः ॥

प्रकृतेः कथमनुपलब्धिरित्यत आह[२] ॥

उपादानं संबन्धः । हानं तदभावः ॥

सौक्ष्म्यादनुपलब्धिः[३] ॥ १०९ ॥

दुरूहत्वं सौक्ष्म्यं, न त्वणुत्वं, प्रकृतेर्विभुत्वात् ॥

कथं तर्हि प्रकृतिर्व्यवस्थेत्यत[४] आह ॥

कार्यदर्शनात्तदुपलब्धेः ॥ ११० ॥

यथा घटदर्शनात्परमाणुज्ञानं, तथा त्रिगुणकार्यदर्शनात्प्रकृतिज्ञानम् ॥

ब्रह्मकारणं जगदिति केचित्, परमाणुकारणमित्यन्ये, प्रकृतिकारणमिति[५] वृद्धा इति[६] संशयमाह[७] ॥

---

१ A ॰गतस्य । २ A ॰रित्याह । ३ Thus only Aniruddha; the other commentators read सौक्ष्म्यात्तदनुपलब्धिः । ४ B ॰तेर्व्य॰ । ५ B and Aph.[3] 132, note 3, प्रधान॰ । ६ इति is omitted in A B । ७ C संशये आह ।

महदादिरूपकार्यदर्शनेन तस्याः प्रामाणिकत्वात् ॥

ननु ब्रह्म जगतः कारणमिति केचित्, परमाणव इत्यपरे, कथं प्रकृतेरेव प्रामाणिकत्वमिति शङ्कते ॥

वादिविप्रतिपत्तेस्तदसिद्धिरिति चेत् ॥ १११ ॥

तदसिद्धिः प्रधानासिद्धिः ॥

सिद्धान्तमाह ॥

तस्याः प्रकृतेः ॥

कार्येण कारणानुमाने[1] न कश्चिद्दोष इत्याशयेन समाधत्ते ॥

तथा[2]प्येकतरदृष्ट्यान्यतर[3]सिद्धेर्नापलापः ॥ ११२ ॥

यदि वादि[4]विप्रतिपत्तिमात्रेण पक्षासिद्धत्वं, विपक्षे[5]ऽपि विप्रतिपत्तिरस्तीति कथं तत्सिद्धिः । यदि व्याप्यज्ञानाद्व्यापकज्ञानस्याविना[6]भावित्वात्पक्ष[7]सिद्धिः, ममाप्येवमिति न कार्याद[8]नुमानापलापः ॥

---

१ c ॰नुमानेन; this was also the original reading of a b। २ A चया॰। ३ B ॰दृष्ट्यैकतर॰, the reading of Mahâdeva and Vijñâna। ४ ॰दि॰ is missing in A। ५ A ॰सिद्धत्वे ऽपि पक्षे। ६ A ॰पि॰ instead of ॰वि॰। ७ C ॰भावित्वाविपक्ष॰। ८ ॰द॰ is missing in A C।

कार्यात्कारणमस्तु, तच्च प्रकृतिरिति कथमित्यत आह ॥

इदानीं प्रकृतेरेव कारणत्वे युक्तिमाह ॥

त्रिगुणविरोधापत्तेः[1] ॥ ११३ ॥

त्रिविधो गुणः, सत्त्वरजस्तमांसि। तद्विरोधः तच्छून्यं जगद्भवेत्। न चैवं दृश्यत इति ॥

कार्यस्य किं सत उत्पत्तिरसतो वेति संशयं निरस्यति ॥

जगत्युपलभ्यमानस्य सुखदुःखमोहात्मकत्वस्य[2] विरोधः स्यात् ब्रह्मणः परमाणूनां कारणत्वे ॥

इदानीं कार्यस्योत्पत्तेः प्रागपि सत्त्वं व्यवस्थापयति ॥

नासदुत्पादो नृशृङ्गवत् ॥ ११४ ॥

असदेकस्वभावं[3] नृशृङ्गादि, सदेकस्वभावमाकाशादि, सदसत्स्वभावा घटादय इति कथं नृशृङ्गतुल्यत्वम्। तन्न, घटादीनां प्रागभावसमये ऽसत्त्वं, नृशृङ्गादीनां

---

१ So has Aniruddha only; the three other commentators read °विरोधापत्तेश्च। २ The MSS. have °मोहात्मकतत्वस्य, but त is obliterated in b। ३ B असदेकमुत्पादं।

सर्वदाऽसत्त्वमिति द्वयोः को विशेषः। घटादीनां जन्मदर्शनं विशेष इति चेत्, एतदेव चिन्त्यते, एतदेवोत्तरमित्यहो नैपुण्यम् ॥

सत्कार्ये[1] न्यायमाह ॥

उपादाननियमात् ॥ ११५ ॥

कारणसंबन्धात्कार्यस्य। संबन्धश्च विद्यमानयोरेव। अन्यथा सर्वदा सर्वत्र[2] कार्योत्पत्तिः स्यात् ॥

एतदेवाह[3] ॥

सर्वत्र सर्वदा[4] सर्वासंभवात् ॥ ११६ ॥

व्यक्तम् ॥

ननूपादानकारणत्वाविशेषेऽपि यस्य यच्छक्यं[5], तदेव तत्[6]करोति। नहि तन्तुर्घटस्य कारणं भवति। कुतः सर्वसंभव इत्यत आह ॥

---

१ A C सत्कार्यं। २ A सर्वं instead of सर्वत्र। ३ A तदेवाह। ४ Here begins a large lacuna in C, extending down to इति मूढैर्° in the commentary to Sûtra 121, apparently owing to the loss of a leaf in the original MS.। ५ B युक्तं। ६ B omits तत्।

सर्वासंभवात् सर्वानुत्पत्तेः लोके दर्शनादिति शेषः ॥

शक्तस्य[1] शक्यकरणात्[2] ॥ ११७ ॥

शक्तस्य शक्तिः शक्यविषया वा[3] न वा । शक्यविषया चेत्, शक्यस्य[4] सत्त्वं वाच्यम् । नेति पक्षे तन्तुतो घटोत्पत्तिस्तदवस्था ॥

अपरं न्यायमाह ॥

कारणभावाच्च[5] ॥ ११८ ॥

कार्यकारणयोरेकत्वात् । घटाकारेण परिणतो ऽपि मृद्रूपतां न जहाति । न च सदसतोरेकत्वम् ॥ यदि द्वयोरेकत्वं, मृत्पिण्डेनापि जलाहरणं कर्तव्यम्[6] । भवेदेवं, यद्यत्यन्ताभेदः स्यात्, भेदाभेदपक्षे तु न कश्चिद्दोष इति । तथा च ।

असत्त्वान्नास्ति संबन्धः कारणैः[7] सत्त्वसङ्गिभिः ।
असंबद्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टो ऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥

---

१ A शक्यस्य । २ B ०कारणात् । ३ वा is omitted in B । ४ B शक्य । ५ A कारणभावात् । ६ B कर्तव्यमिति । ७ A कारणं ।

शङ्कते ॥

कार्यस्य कारणात्मकत्वादित्यर्थः। नहि कार्यकारणयोरभेदे कारणं सत्कार्यं त्वसदिति संभवति। कार्यस्य कारणाभेदसाधकान्युक्तानि तत्त्वकौमुद्याम्[1] ॥

भावे[2] भावयोगश्चेन्न वाच्यम्[3] ॥ ११९ ॥

यदि भावे कारणे भावस्य कार्यस्य विद्यमानस्य योग उत्पत्तिः, तदा 'भविष्यति घटः, उत्पद्यते, नष्ट' इति व्यपदेशो न स्यात्[4] ॥

सिद्धान्तमाह ॥

'कार्यस्योत्पत्तेः प्रागपि भावे तद्रूपे सत्युत्पत्तियोगो न' चेत्, असत[5] एवोत्पत्तिव्यवहारात्,

समाधत्ते ॥

न, अभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ ॥१२०॥

यथा शुक्लपटस्य मलिनस्य क्षालनादिना शुक्लत्वमभि-

---

१ Here follows a long extract from the Sâṁkyatattva-kaumudî to the 9th Kârikâ। २ B नाभावो। ३ A वाक्यं; the reading of this Sûtra, as given above, is peculiar to Aniruddha; the three other commentators have न भावे भावयोगश्चेत्। ४ स्यात् is missing in B। ५ असत is missing in a।

व्यज्यते, तथा कुलालव्यापाराद्घटो ऽभिव्यज्यते, मुद्गराभिघातात्तिरोभूयते। दृष्टं च, अभिव्यक्तिः पीडनेन[1] तिलेषु तैलस्य, दोहनेन गवि पयसः, अवघातेन धान्ये तण्डुलानामित्यादि[2]। तस्मादभिव्यक्तिनिबन्धनौ शब्दप्रयोगार्थक्रियाभेदाविति[3] ॥

अभिव्यक्तिनिबन्धनोत्पत्तिः, किंनिबन्धनो विनाश इत्यत आह ॥

नाशः कारणलयः ॥ १२१ ॥

मुद्गराभिघाताद्घटस्य कारणे लयः, तन्निबन्धनो नाश इति शब्दार्थक्रियाभेदौ। यदि लयः, पुनरुद्भवो दृश्येत, न च दृश्यत[4] इति। मूढैर्न दृश्यते, विवेचकैर्[5]दृश्यत एव। तथा हि, तन्तौ[6] नष्टे मृद्रूपेण परिणामः, मृदश्च कार्पासवृक्षरूपेण[7] परिणामः, तस्य पुष्पफलतन्तुरूपेण परिणामः। एवं सर्वे भावाः ॥

किमभिव्यक्तिः सती असती वा। सती चेत्, नित्यं[8]

१ A पीडने। २ B तण्डुलस्येत्यादि। ३ A ॰क्रियाभावाविति। ४ A दृश्य। ५ AB विवेकै॰। ६ A ततो। ७ B कार्पासवृक्षेण। ८ A नित्य।

कार्योपलब्धिः स्यात्। असती चेत्, सत्कार्यहानिः। तस्या अपि[1]अभिव्यक्तिरन्या तस्या अपि[1]अन्येत्यनवस्थेत्यत आह ॥

पारंपर्यतो ऽन्वेषणाद्बीजाङ्कुरवत् ॥ १२२ ॥

भवत्वभिव्यक्तिसहस्रं, तथापि[3] न दोषो ऽनादित्वाद्बीजाङ्कुरवदिति ॥

युक्त्यन्तरमाह[4] ॥

उत्पत्तिवद्वादोषः ॥ १२३ ॥

किमुत्पत्तिरुत्पद्यते न वा। उत्पद्यते चेत्, अस्या अपि[5]उत्पत्तिरित्यनवस्था। नोत्पद्यते चेत्, किमसत्त्वान्नित्यत्वाद्वा। यद्यसत्त्वात्, कदाचिदप्युत्पत्तिर्नास्तीति सर्वदानुपलम्भः स्यात्। अथ नित्यत्वात्, सर्वदा कार्योत्पत्तिः स्यात् ॥ अथोत्पत्तेः[6] स्वयमेवोत्पत्तिरूपत्वात्

---

१ अ॰ is missing in B। २ ऽन्वेषणाद्बी॰ is read by Aniruddha only; the other commentators have ऽन्वेषणा बी॰। ३ B तथा। ४ A अत्युत्तरमाह, C युक्त्युत्तरमाह। ५ B and Aph.[3] 144, note 2, omit अपि। ६ अथोत्पत्तेः is missing in A।

किमुत्पत्त्यन्तरकल्पनयेति, तर्ह्यभिव्यक्तेरप्यभिव्यक्ति-रूपत्वात् किमभिव्यक्त्यन्तर[1]कल्पनयेति तुल्यम्। तच्च यत्तव सिद्धान्तः सो ऽस्माकमपि ॥

प्रकृतिकार्याणामन्योऽन्यं साधर्म्यमाह ॥

हेतुमदनित्यं सक्रियम[3]नेकमाश्रितं लिङ्गम् ॥१२४॥

हेतुमत् कारणवत्। [4]अनित्यं विनाशि। सक्रियं उपात्तं देहं त्यजत्[5] [पृथिवी[6] शरीरादयश्च स्पन्दन्ते]। अनेकं पुरुषभेदात्। आश्रितं स्वकारणे। लिङ्गं स्वकारणे लयं गच्छतीति ॥

यदि पञ्चविंशतितत्त्वं, किं ज्ञानसुखादीनां सामा-

---

१ ॰न्तर॰ is missing in A। २ The other commentators insert अद्यापि here। ३ C सक्रियकम॰। ४ Here begins a lacuna in A, extending as far as लिङ्गं in this explanation। ५ C त्यजति। ६ पृथिवी is corrected according to the Sâṁkhyatattvakaumudî to Kârikâ 10; A has प्रकृति, C omits the word altogether. The text in Aph.[3] 145, note 3, offers some various readings; but I cannot help thinking that it has been construed arbitrarily by the editor; as he states himself in note 2, Aniruddha omits अद्यापि; still अद्यापि is explained by असर्वगम् in the commentary।

न्यकर्मणामभाव एव। तथा च दृष्टपरित्याग इत्यत आह ॥

अत्र व्यक्तमिति पूरणीयम्। तच्चोद्देश्यं, हेतुमत्त्वादयस्तत्र विधीयन्ते[१] ॥

आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः प्रधानव्यपदेशाद्वा ॥ १२५ ॥

आञ्जस्यात् स्वरूपतः[२] चतुर्विंशतितत्त्वादभेद[३]स्तल्लक्षणयोगाद्[४]गुणसामान्यादीनाम्। तत्सिद्धिः तेष्वेवान्तर्भावात्सिद्धिः। वाशब्दः पक्षान्तरं सूचयति। 'प्रधानव्यपदेशाद्वा' गुणादीनां पारंपर्येण प्रधानकार्यत्वेन[५] कार्यकारणयोरभेदात् प्रधानव्यपदेशादेव गुणादिसिद्धिः। न त्वभावादननुकीर्तनम्[६] ॥

प्रकृतिकार्ययोः साधर्म्यमाह ॥

वाशब्दश्चार्थे ॥

---

१ Here follows a long extract from the Sâṁkhyatattvakaumudî to Kârikâ 10। २ A C तत्स्वरूपतः। ३ Thus all MSS। ४ A ०द्गृह्य० in place of ०द्गुण०। ५ पारंपर्येण प्रधानकार्यत्वेन, the reading of B, is omitted in C; A has सामान्यकर्मणामभाव इति instead। ६ A ०वादनुकीर्तनं, C ०वादनुत्कर्तनं।

त्रिगुणाचेतनत्वादि द्वयोः ॥ १२६ ॥

त्रिगुणमचेतनम्। आदिशब्दात्परार्थत्वम्। द्वयोरिति कार्यकारणयोः ॥

प्रकृतिभागस्य त्रिगुणस्यान्योऽन्यवैधर्म्यमाह ॥

प्रीत्यप्रीतिविषादाद्यैर्गुणानामन्योऽन्यं[1] वैधर्म्यम् ॥ १२७ ॥

प्रीतिः सुखम्। आदिशब्दाल्लघु प्रकाशकं सत्त्वम्। अप्रीतिः दुःखम्। आदिशब्दादुपष्टम्भकं चलं रजः। विषादः मोहः। आदिशब्दाद्गुरु वरणकं तमः ॥

तेषां वैधर्म्यकथनावसरे साधर्म्यमाह ॥

लघ्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यं गुणानाम्[2] ॥ १२८ ॥

लघुचल[3]गुरुत्वैः। अनेन वैधर्म्यमुक्तम्। आदिशब्दात्साधर्म्यं सूचितं, तच्च पुरुषार्थत्वं अन्योऽन्याभिभवजननमिथुनवृत्तित्वम् ॥

---

१ A C ॰मन्योऽन्य॰। २ "So reads Aniruddha only. Vijñâna, Nâgeśa and Vedânti Mahâdeva have: लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम्" Aph.[3] 149, note 3. A has ॰रन्योऽन्य॰ and omits वैधर्म्यं। ३ B ॰चलन॰।

हेतुमदित्यादिना[१] महदादीनां कार्यत्वमुक्तम्। तत्र प्रमाणमाह ॥

...... इति च त एव[२] समादधुः। अन्ये[३] तु लघुत्वादिधर्मैर्वैधर्म्यं, साधर्म्यं त्वन्योऽन्याभिभवजननमिथुनवृत्तित्वेनेत्याहुः[४] ॥

महदादीनां कार्यत्वप्रमाणमाह ॥

उभयान्यत्वात्कार्यत्वं महदादेर्घटादिवत् ॥ १२९ ॥

प्रकृतिपुरुषयोर्नित्ययोरन्यत्वात्। शेषं व्यक्तम् ॥

हेत्वन्तरमाह ॥

परिमाणात्[५] ॥ १३० ॥

परिमितत्वात् ॥

अपरां युक्तिमाह ॥

समन्वयात् ॥ १३१ ॥

---

१ B हेतुमदादीनां। २ Viz. Vijñânabhikshu in the Sâṁkhyapravachanabhâshya। ३ Viz. Aniruddha। ४ Hereafter follows a long extract from the Sâṁkhyatattvakaumudî to Kârikâ 12। ५ Corrected; all three MSS. read परिणामात्।

प्रधानेन सह सम्यगन्वयात् प्रधानगुणानां सर्वपदार्थेषु[१] दर्शनात् ॥

एतदेवाह[२] ॥

शक्तितश्चेति ॥ १३२ ॥

कारण[३]शक्त्या कार्यं प्रवर्तत इति महदादयः क्षीणाः सन्तः प्रकृत्यनुपूरणेन[४] कार्यं जनयन्ति। अन्यथा प्रवृत्तिशीलत्वात्[५]सर्वदा कार्यं जनयेयुः ॥

व्यतिरेकमाह ॥

तद्धाने प्रकृतिः पुरुषो वा ॥ १३३ ॥

कार्यमकार्यं च कोटिद्वयम्। कार्यताहाने प्रकृतौ पुरुषे वा महदादीनां प्रवेश इति ॥

उभयकोटिविनिर्मुक्ता एव महदादयो भविष्यन्तीत्यत आह ॥

तयोरन्यत्वे[६] तुच्छत्वम्[७] ॥ १३४ ॥

---

१ C ०पदार्थे। २ B तदेवाह। ३ कारण is missing in C। ४ B ०नुपूरेण। ५ B प्रवृत्तिलीनत्वात्। ६ A C उभयोरपि ७ "Nâgeśa has तुच्छता" Aph.[3] 153, note 3।

तयोः[१] कार्याकार्ययोरन्यत्वे[२] महदादीनां तुच्छरूपत्वं अभावरूपत्वम् ॥

[३]किमर्थं महदादयः कार्यत्वेन प्रकृतेर्लिङ्गम्। अविनाभावादेव लिङ्गं[४] भविष्यन्तीत्यत[५] आह[६] ॥

कार्यात्कारणानुमानं तत्साहित्यात् ॥ १३५ ॥

भवत्येवं, यत्र कारणरूपं कार्यं न[७] दृश्यते, यथा चन्द्रोदयात्समुद्रवृद्ध्यनुमानम्। अत्र तु प्रधानरूपस्य महदादौ दर्शनात्कार्यात्कारणानुमानमेव। तत्साहित्यात् प्रकृतिरूपस्य महदादौ दर्शनात् ॥

एवं च महत्तत्त्वमेव जगत्कारणमस्तु, किं प्रधानेनेत्यत आह ॥

कार्यविशिष्टतयैव कारणानुमानं, न तु ताटस्थ्येन, परेषामिवेति भावः ॥

अव्यक्तं त्रिगुणाल्लिङ्गात् ॥ १३६ ॥

---

१ A C उभयोः। २ A ०रन्यत्वं। ३ C has तत्र before किमर्थं। ४ अविनाभावादेव लिङ्गं is missing in A। ५ B C भविष्यती०। ६ B ०त्यत्राह। ७ A कार्येण।

त्रिगुणास्लिङ्गात्, लयं गच्छतीति, महत्तत्वात् प्रधानमनुमातव्यम्। महत्तत्त्वं चाध्यवसायरूपं व्यक्तं विनाशि[1] प्रत्यक्षसिद्धम्। तेन लिङ्ग्यनुमानम्[2] ॥

तथाप्यन्यदेव कारणं भविष्यति, किं प्रकृत्येत्यत्राह[3] ॥

तत्कार्यतस्तत्सिद्धेर्नापलापः ॥ १३९ ॥

तत्कारणं कार्यमकार्यं वा। कार्यत्वे तत्कारणस्यापि तथात्वे सत्यनवस्था। मूलकार्यत्वे तदेव सेति। 'तत्कार्यत' इति प्रकृतिकार्यतः प्रकृतिसिद्धेर्नापलापः ॥

भवतु प्रकृतिसिद्धिः, पुरुषसिद्धिस्तु न स्यादेव, नहि तस्य कार्यमस्तीत्यत आह[4] ॥

सामान्येन विवादाभावाद्धर्मवन्न साधनम् ॥ १४० ॥

सामान्येन तावदात्मनि विवादो नास्ति, विशेषे हि विवादो[5] 'ऽनेक एको व्यापको ऽव्यापक' इत्यादिः[6]। यथा सर्वस्मिन्दर्शने धर्म इत्यविवादः, धर्म[7]विशेषे हि

---

१ A विनाश॰। २ A C नित्यानुमानं। ३ A C ॰त्यत्राह। ४ B omits तत्, thereby giving the reading of the three other commentators। ५ B विवादे। ६ B इत्यादि। ७ B धर्मे।

विप्रतिपत्तिः ॥ 'न तत्साधनं' न तच्च कार्यकारणभावः साधनम्। अन्यत्साधनं वक्ष्यामीत्यभिसंधिः ॥

देहेन्द्रियादय एवात्मानः, किमन्यकल्पनयेत्यत आह ॥

...... भोक्तर्यहंपदार्थे न कस्यापि विवादः। तस्मात्पुरुषस्य देहादिव्यतिरेकनित्यत्वादिसिद्ध्यर्थमेव प्रमाणापेक्षा, न स्वरूपसिद्ध्यर्थं, तस्य सर्ववादिपामरसिद्धत्वात् ॥

शरीरादिव्यतिरिक्तः पुमान् ॥ १३९ ॥

व्यक्तम् ॥

अत्र न्यायमाह ॥

संहतपरार्थत्वात् ॥ १४० ॥

यत्संहतं तदसंहतपरार्थम्। संहतपरार्थत्वे ऽनवस्था स्यात्। संहतत्वं च गुणानामन्योऽन्यमिथुनभावेन कार्यकारणम्[१]। अथवा द्रवकठिनता संहतत्वम्। तच्च प्रकृत्यादौ तिरोभूतमस्ति, अन्यथा तत्कार्येषु[२] संहतताऽदर्शनप्रसङ्गात् ॥

---

१ Thus all three MSS.; Aph.[3] 160, note 1, कार्यकारणम्। २ A C and Aph.[3] insert महदादिषु।

एतदेव[1] स्पष्टयति ॥

त्रिगुणादिविपर्ययात् ॥ १४१ ॥

पुरुषे त्रिगुणादिविपर्ययात् तददर्शनात्[2]। आदिशब्दादन्येषां प्रकृतिधर्माणामप्यदर्शनादिति ॥

न्यायान्तरमाह ॥

आदिशब्दादचेतनत्वादिग्रहणम् ॥

अधिष्ठानाच्चेति ॥ १४२ ॥

चेतनो ह्यधिष्ठाता भवति प्रकृतिश्च जडेत्यर्थः ॥

युक्त्यन्तरमाह[3] ॥

अधिष्ठातृत्वाच्चेत्यर्थः। संयोगविशेषेण परिणामहेतुत्वमधिष्ठातृत्वम्। संयोगश्च भिन्नयोरेवेति भावः ॥

भोक्तृभावात् ॥ १४३ ॥

भोग्या प्रकृतिः, भोक्ता पुरुषः। यद्यपि कूटस्थत्वादात्मनो भोक्तृत्वं नास्ति, तथापि बुद्धिच्छायापत्त्येत्युक्तम्॥

---

१ B तदेव। २ A C तद्दर्शनात्। ३ A अत्युत्तरमाह, C प्रत्युत्तरमाह।

मोक्षार्थं प्रवृत्तिः, सा किमात्मनः प्रकृतेर्वेत्यत आह ॥

कैवल्यार्थं[1] प्रवृत्तेः[2] ॥ १४४ ॥

त्रिगुणस्वभावत्वात्प्रकृतेर्न स्वभावप्रच्यवः, अनित्यत्वप्रसङ्गाच्च। यस्यौपाधिका गुणास्तस्य कैवल्यं संभवति। स चात्मेति ॥

स किंरूप इत्यत आह ॥

जडप्रकाशायोगात्प्रकाशः ॥ १४५ ॥

जडो न प्रकाशत[3] इति सिद्धम्। यद्यात्मापि[4] जडः स्यात्, तस्याप्यन्येन प्रकाशेन भवितव्यम्। लाघवाच्चात्मैव प्रकाशरूपो ऽस्तु। श्रुतिश्च 'येनेदं सर्वं विजानाति तं केन विजानीयात्, विज्ञातारमरे केन विजानीयादिति' ॥

जडो ऽप्यात्मास्तु चिद्धर्मा। तेन जगत्प्रकाशयति। न तु चिद्रूप इत्यत आह ॥

---

१ A कैवल्यार्थे। २ B प्रकृतेः; "this lection is that of Aniruddha alone. Vijñâna, Nâgeśa, and Vedânti Mahâdeva end the Aphorism with च" Aph.[3] 162, note 2। ३ C प्रकाश। ४ A C यद्यात्मापि।

निर्गुणत्वान्न[१] चिद्धर्मा ॥ १४६ ॥

यद्यात्मनो धर्मयोगः स्यात्, परिणामित्वं स्यात्, ततश्चानिर्मोक्ष इति ॥

अत्र श्रुतिविरोधमाह ॥

चिद्धर्मा प्रकाशधर्मा न, किं तु प्रकाश एव। कुतः। निर्गुणत्वात् गुणरहितत्वात्। प्रतीयमानास्त्विच्छादयो बुद्धेरेवेति भावः ॥

श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् ॥ १४७ ॥

'असङ्गो ह्ययं पुरुष' इत्यादिश्रुतिः। गुणयोगे सा बाधिता स्यात् ॥

दूषणान्तरमाह ॥

...... निर्गुणत्वादि सुस्थिरमिति शेषः ॥

सुषुप्त्याद्यसाक्षित्वम्[२] ॥ १४८ ॥

यद्यात्मा जडः स्यात्, सुषुप्त्यादावसाक्षित्वं अज्ञातृत्वं

१ A निर्गुणत्वाच्च न। २ A सुषुप्त्यादिसाक्षित्वं. My three MSS. of Mahâdeva offer the same text of this Aphorism as Aniruddha and Vijñâna; cf., however, Aph.[3] 165, note 4।

स्यात्। न चैवं, सुखमहमस्वाप्समिति प्रतिभासनात्। आदिशब्दात्स्वप्नग्रहणम्[१] ॥

एक एवात्मेति वेदान्तिनः। तथा च

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः ॥

अत्राह ॥

लाघवादात्मैक्यमिति केचित्। तन्मतं दूषयति ॥

जन्मादिव्यवस्थातः पुरुषबहुत्वम्[३] ॥ १४९ ॥

यद्येक आत्मा, एकस्मिञ्जायमाने सर्वे जायेरन् ॥

परमतमाशङ्कते ॥

अपूर्वदेहेन्द्रियादिसंघातसंयोगो जन्म, मरणं तद्वियोगः। जन्ममरण-सुखदुःखबन्धमोक्षव्यवस्थातः अत्युक्ताया हेतोः पुरुषा बहवः। 'पुण्यः पुण्येन, पापः पापेने'ति जन्मव्यवस्था।

'य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ती'-ति बन्धमोक्षव्यवस्था ॥

---

१ A सुषुप्तम॰। २ A C सुषुप्तेर्ग्रहणं। ३ Mahâdeva reads, according to my three MSS., पुरुषस्य बहुत्वं; cf. Aph.[3] 166, note 3।

उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः ॥ १५० ॥

यथैकमाकाशं, घटाद्युपाधिभेदाद्घटे नष्टे 'घटाकाशं नष्टमि'ति व्यपदिश्यते, तथैकात्मपक्षे ऽपि देहावच्छेदात्तन्नाशे 'आत्मा नष्ट' इति व्यपदेशमात्रम्। नानात्मपक्षे ऽप्यन्यथात्मनो नित्यत्वात्कथं जन्ममरणव्यवस्थेति ॥

समाधानमाह ॥

अतिरिक्त एवोपाधिविशिष्टो ऽस्तु। तत्राह ॥

उपाधिर्भिद्यते, न तु तद्वान् ॥ १५१ ॥

उपाधिर्भिद्यते। न चान्यनाशादन्यत्र नाशव्यवहारो ऽतिप्रसङ्गात्। एकात्मपक्षे च व्यक्त[1] एव[2] विरुद्धधर्माध्यासः, एकस्य बन्धमोक्षाभावात्। आकाशस्य तु धूमादियोगा[3]योगावविरुद्धौ, संयोगस्याव्याप्यवृत्तित्वात् ॥

एतेन[4] किं स्यादित्यत[5] आह ॥

विशिष्टस्यातिरिक्तत्वे हि विशेषणनाशे न तन्नाश एव स्यादिति भावः ॥

---

१ A व्यक्तं। २ A च। ३ °योगा° is missing in A। ४ A एतैः। ५ A omits इति।

एवमेकत्वेन[1] परिवर्तमानस्य न विरुद्धधर्माध्यासः ॥ १५२ ॥

न विरुद्धधर्माध्यासो भवति ॥

अन्यधर्मस्याप्यन्यत्रारोपो दृष्टो, यथा[2] प्रकृतेः[3] कर्तृत्वं पुरुषे ऽन्यत्रे[4]त्यत्राह[5] ॥

एकत्वेन सर्वतो वर्तमानस्य यो विरुद्धः सुखदुःखाध्यासः तदापत्तिः, सैवं सति पुरुषवहुत्वे सति नेत्यर्थः ॥

नन्वात्मनो निर्धर्मकत्वात् सुखादीनां बुद्ध्यादिधर्मत्वाच्च न सांकर्यम् । अत आह ॥

अन्यधर्मत्वे ऽपि नारोपात्तत्सिद्धिरेकत्वात् ॥ १५३ ॥

[6]पुरुषकर्तृत्वं भ्रान्तं, ऋत पुरुषाकर्तृत्वस्य[7] सत्यत्वात्, आरोपस्यासत्यत्वात् । न च सत्यासत्ययोः संबन्धस्तात्त्विको भवति । असङ्गित्वादात्मनो[8] न जन्ममरणादि संभवति ॥

---

१ A C परमेकत्वेन । २ B यथा यथा । ३ B प्रकृतिः । ४ C omits अन्यत्र । ५ The whole of this Avatârana is missing in A । ६ A prefixes न । ७ Corrected according to Aph.[s] 171, note 1; my MSS. have पुरुषकर्तृत्वस्य । ८ A असंगत्वात्मना ।

एवं च[१] श्रुतिविरोधः स्यात्। तथा च 'एकमेवाद्वितीयं ब्रह्म'

'नेह नानास्ति किंचन, मृत्योः स मृत्युमाप्नोति।
य इह नानेव पश्यति'॥

अत आह[२]॥

बुद्धिधर्मत्वे ऽपि सुखादीनामारोपात्पुरुषे व्यवस्था न संभवति, आरोपाधिष्ठानस्यैकत्वात्। नहि स्फटिकैक्ये आरोपितानां नीलपीतादीनां 'नीलो ऽयं पीतो ऽयमि'ति व्यवस्था संभवति। घटाकाशादीनां तूपाधिभेदेन भिन्नानामौपाधिकधर्मव्यवस्था घटत इति भावः॥

नाद्वैतश्रुतिविरोधो जातिपरत्वात्॥ १५४॥

व्यक्तम्॥

नन्वनेकात्मवादिनो ऽप्येकस्यात्मनो बन्धमोक्षौ विरुद्धावित्यत आह॥

विदितबन्धकारणस्य दृष्ट्या तद्रूपम्[३]॥ १५५॥

---

१ च is omitted in B। २ AC अत्राह। ३ Thus Aniruddha only; the other commentators read दृष्ट्याऽतद्रूपम्; cf. Aph.[3] 172, note 3।

विदितं बन्धकारणं प्रकृतिपुरुषविवेकादर्शनं[1] यस्य, तस्य दृष्ट्या विवेकज्ञानेन तद्रूपं कैवल्यरूपम् ॥

विवेकादर्शननिमित्तो बन्धो न तात्त्विकः। दर्शनाददर्शनं निवर्तत इति युक्तिः[2]। एवं चैकात्मपक्ष एव[3] न्याय्यं पश्यामो, न नानात्मपक्ष[4] इत्यत्राह[5] ॥

नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५६ ॥

अन्धो न पश्यतीति चक्षुष्मानपि किं नोपलभते। नानात्मवादिनामनेके न्यायाः[6] सन्तीत्यर्थः ॥

इतो ऽपि नानात्मान इत्याह ॥

वामदेवादिर्मुक्तो नाद्वैतम्[7] ॥ १५७ ॥

पुराणादौ श्रुतं 'वामदेवो मुक्तः शुको मुक्त' इत्यादि। यद्येक एवात्मा, एकमुक्तौ सर्वमुक्तेर्भेदश्रुतिबाधः स्यात्[8] ॥

नानात्मपक्षे ऽनादौ संसारे कदापि को ऽपि मुच्यत

---

१ B ०पुरुषा०। २ BC clearly मुक्तिः। ३ A एवं। ४ B नानात्मक। ५ B इत्याह। ६ B न्याय्याः। ७ AC वामदेवादिमुक्त्यापि नाद्वैतं; Aph.[3] 175, note 1: "Aniruddha perhaps has वामदेवादिमुक्तेर्नाद्वैतम्"। ८ AC ०र्भेदश्रुतिर्बाधिता स्यादिति।

इति क्रमेण सर्वमुक्तौ सर्वशून्यता[१] स्यात्, एकात्मपक्षे तूपाधिविगम एव मोक्ष इत्यत आह[२] ॥

अनादावद्य यावदभावाद्भविष्यदप्येवम् ॥ १५८ ॥

अनादौ संसारे ऽद्य यावच्छून्यताया अदर्शनाद्भविष्यति मुक्तिरिति पक्षे नास्ति प्रमाणम् ॥

समाधानान्तरमाह[३] ॥

इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥

अनन्तत्वादात्मनां क्रमेण मुक्तिरपि[४] स्यात्, संसारोच्छेदो ऽपि न स्यात्। इदानीमिव[५] सर्वत्र भविष्यत्काले[६] ऽपि मुक्तिर्भविष्यतीति नात्यन्तोच्छेदः स्यात्, प्रवाहनित्यत्वात् ॥ उपाधिविगमो मोक्ष इति पक्षे ऽपि[७] सर्वशून्यताप्रसङ्ग इति तुल्यो ऽनुयोगः[८]। यथा नानात्मनां क्रमेण मुक्तौ सर्वोच्छेदः, तथा सर्व[९]कर्मो-

---

१ A C संसारशून्यता। २ Corrected; my MSS. have इत्याह। ३ A समाधानमाह। ४ A omits अपि। ५ B इदानीं च। ६ A ०कालो। ७ ऽपि is omitted in B। ८ A तुल्यानुयोगः। ९ सर्व० is omitted in B।

च्छेदे सर्वोपाधिनाशाज्जगच्छून्यं स्यात् । अथोपाधीनामनन्तत्वान्न शून्यता, नानात्मपक्षे ऽपि तुल्यत्वम्[1] । तथा च

अत एव हि विद्वत्सु मुच्यमानेषु संततम्[2] ।
ब्रह्माण्डजीवलोकानामनन्तत्वादशून्यता ॥

किमात्मा बद्धो मुक्तो वा । बद्धत्वे स्वरूपस्याप्रच्यवादनिर्मोक्षः, प्रच्यवे ऽनित्यत्वम् । मुक्तत्वे व्यर्थो ध्यानादिरित्यत आह ॥

व्यावृत्तोभयरूपः[3] ॥ १६० ॥

न बद्धो नायं मुच्यते, किं तु नित्यमुक्तः । अज्ञाननाशस्तु ध्यानादिना क्रियत इति ॥

आत्मनः साक्षित्वमुक्तम् । प्राप्तविवेकस्यापि साक्षित्वे ऽनिर्मोक्ष इत्यत आह[4] ॥

श्रुतिस्मृतिन्यायेभ्यो व्यावृत्ते नित्यनिवृत्ते उभयरूपे[5] रूपभेद इति यावत्, यस्मात्तथा ॥

---

१ A C तुल्यं । २ B सर्वदा । ३ C °भयं रूपः । ४ B इत्यत्राह । ५ Aph.[3] 179, note, inserts उभे रूपे here; but the two words are not found in any of my three MSS. ।

[1]अक्षसंबन्धात्साक्षित्वम् ॥ १६१ ॥

अक्षं इन्द्रियम्। तत्संबन्धात्साक्षित्वम्। विवेके च[2] केन्द्रियसंबन्ध इति ॥

सर्वदा किंरूप आत्मेत्यत आह ॥

नित्यमुक्तत्वम् ॥ १६२ ॥

स्पष्टम् ॥

औदासीन्यं चेति ॥ १६३ ॥

व्यक्तम् ॥

आत्मनः कर्तृत्वं श्रूयते, तत्कथमित्यत आह ॥

उपरागात्कर्तृत्वं चित्सांनिध्याच्चित्सांनिध्यात् ॥ १६४ ॥

चित्सांनिध्येन प्रकृत्युपरागादात्मनः कर्तृत्वं कर्तृत्वाभिमानः ॥ चित्सांनिध्यादिति वीप्सा परिसमाप्तौ, श्रुतौ तथा दृष्टत्वादिति ॥

---

१ B साक्षात्संबन्धा°, the reading of the three other commentators; cf. Aph.[3] 180, note 2। २ A विवेकेन, C विवेकिनः।

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ[1] विषयाध्यायः प्रथमः ॥

अथ विषयनिरूपणानन्तरं प्रधानकार्यनिरूपणार्थं द्वितीयाध्यायारम्भः[2] ॥

अत्र मामकसंदर्भे नास्ति क्वापि स्वतन्त्रता ।
इति ज्ञापयितुं वृत्तिसार इत्यभिधा कृता ॥
परवाक्यानि लिखता तेषामर्थो विभावितः ।
कृता संदर्भशुद्धिश्चेत्येवं मे नाफलः श्रमः ॥

इति श्रीस्वयंप्रकाशतीर्थाङ्घ्रिलब्धवेदान्तिसत्पदेन महादेवेनोन्नीते सांख्यवृत्तिसारे प्रथमो ऽध्यायः ॥

एवं प्रथमेनाध्यायेन शास्त्रस्य विषयो निरूपितः । पुरुषस्यापरिणामित्वोपपादनाय तु प्रकृतितः सृष्टिप्रक्रियाभिधास्यते विस्तरेण द्वितीये ॥




१ B श्रीकपिल०, C कपिल० । २ B द्वितीयारम्भः ।

विमुक्तविमोक्षार्थं[1] स्वार्थं वा प्रधानस्य ॥ १ ॥

स्वभावविमुक्त[2] आत्मा। तस्याभिमानिकबन्ध[3]विमोक्षार्थं प्रधानस्य जगत्[4]कर्तृत्वम्। दुःखसृष्टौ स्वभावादेव वैराग्यान्मोक्षे वै[5] पुरुषः प्रवर्तते। सुखसृष्टौ च दुःखशबलत्वात्[6] सुखस्यापि दुःखपक्ष[7]निक्षेपाद्वैराग्यमेवोपजायते। तच्चतुर्विधं, [8]यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञा वशीकारसंज्ञा चेति। हेयं दुःखमनागतमेकविंशतिप्रकारं, शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति। तत्र शरीरं दुःखायतनत्वाद्दुःखं, इन्द्रियाणि विषया बुद्धयश्च तत्साधनभावात्, सुखं दुःखानुषङ्गात्, दुःखं यातनापीडा-

---

१ B विमुक्तमोक्षार्थं, the reading of the three other commentators; that ०विमोक्षार्थं (AC) is really the reading of Aniruddha, follows from his explanation of aphorism III, 57 where our Sûtra is quoted and the MSS. offer no v. l.। २ A ०विमुक्तौ। ३ बन्ध is missing in B। ४ जगत् is omitted in A। ५ वै is omitted in C। ६ A दुःखकलिलत्वात्। ७ C ०पक्षे। ८ The text from यतमानसंज्ञा to चेति is found only in B; cf. Sâṁkhyatattvakaumudî to Kârikâ 23।

संतापात्मकं मुख्यत एवेति। तस्य निर्वर्तकमसाधारणं[1] कारणमविद्या तृष्णा[2] धर्माधर्माविति। अविद्या विपरीतज्ञानं, तत्संस्कारश्च विद्वद्भिरुक्तस्तृष्णादीनामसाधारणो हेतुः। दुःखहानं च दुःखोत्पत्तिनिवृत्तिरात्यन्तिकी। तस्योपायस्तत्त्वज्ञानमात्मविषयं, ततो ऽविद्याया निवृत्तेः। तथा चोक्तं 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'

'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः'॥

'तरति शोकमात्मविदि'ति। स द्विविधः परश्चापरश्चेति। तथा चोक्तं 'द्वे ब्रह्मणी वेदितव्ये[3], परं चापरमेव चे'ति। विश्वैश्वर्यविशिष्टः संसारधर्मैरीषदप्यसंस्पृष्टः परो भगवान्महेश्वरः सर्वज्ञः सकलजननादिधाता[4]। स कथं ज्ञातव्यः। अनुमानाद्वा शमाद्वा[5]। तथा हि, विवादाध्यासितमुपलब्धं सकारणकं[6], अभूत्वा भावित्वात्, चित्रवदित्यनुमानम्। ततः[7] सामान्येनावगतस्य योगेन विशेषतो ज्ञानम्। अपरस्य

---

१ B °मसाधारणा°। २ B C तृष्णे। ३ C विदितव्ये। ४ A °द्विधानात्। ५ शमाद्वा is missing in C। ६ A C °मुपलब्धिमत्कारणकं। ७ A C ततश्च।

जीवस्य स्वानुभवादेव सिद्धिः। तयोश्च परापरयोर्विवेकज्ञानाय[१] प्रकृतेः प्रवृत्तिः[२]। तत्र परार्थता वक्ष्यते[३]॥ [४]स्वार्थता च, यं पुरुषं प्रत्यात्मानं[५] विवेकेन दर्शितवती, तं प्रत्युदास्ते॥ अचेतनायाः प्रकृतेः कथं[६] प्रवृत्तिः। दृष्टमचेतनानामपि वृक्षाणां फलादिद्वारेण प्रवृत्तिरिति॥

अथ के मोक्षाधिकारिण इत्यत्राह॥

विरक्तस्य तत्सिद्धेः[७]॥ २॥

तथा च श्रुतिः 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्यायाथ भिक्षाचर्यं चरन्ती'ति, 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति'॥

यदि वैराग्याच्छ्रवणानन्तरं[८] मोक्षस्तदा सर्वेषां गुरूपदेशानन्तरं मोक्षः स्यात्, न चैवं दृश्यत इत्यत्राह॥

---

१ B विवेकेन ज्ञानाय। २ B प्रकृतिः in place of प्रकृतेः प्रवृत्तिः। ३ This sentence is missing in C। ४ The following copyist's remark is found in A C: 'जायते' [viz. दुःखपक्षनिक्षेपाद्वैराग्यमेवोपजायते, page ८७, line ५] तदनन्तरं 'स्वार्थता चे'त्यतः प्राक्कुत्रचित्पुस्तके ग्रन्थः क्षिप्तो दृश्यते। ५ A C प्रत्यात्मना। ६ B प्रथमं। ७ C तत्सिद्धिः। ८ B वैराग्यान्वेषणानन्तरं।

न श्रवणमात्रात्तत्सिद्धिर[1]नादिवासनापटुत्वात्[2] ॥ ३ ॥

न श्रवणानन्तरं मोक्षः, किं तु यस्यानादिवासना[3]पटुस्तस्य क्षिप्रं मुक्तिः, अन्यस्य चिरमिति[4] ॥

युक्त्यन्तरमाह ॥

बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥

यथैकस्य बहवो भृत्या आराधनापराधाभ्यां[5] केचिन्मुच्यन्ते केचित्प्रसादभाजः केचिद्बध्यन्ते, तथा प्रकृतिरेका पुरुषाश्च बहव इति। येषां स्पष्टं विवेकज्ञानं तेषां शीघ्रं, येषामुपासनामात्रं तेषां क्रमेण, अन्येषां नास्त्येव ॥

कूटस्थत्वादात्मनो बन्धो नास्त्येवेत्यत्राह ॥

प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥

[6]प्रकृतिर्यं प्रत्यात्मानं दर्शितवती तं प्रति प्रकृतेरप्रवर्तनं मोक्षः। यं प्रति प्रवर्तते तं प्रति पुरुषं[7] छायापत्तिरेवाध्यासः[8], न तात्त्विकः। तथा च

---

१ C न वाक्यमात्रात्सिद्धिर०। २ So read Aniruddha, Mahâdeva and Nâgeśa; Vijñâna has ०वासनाया बलवत्त्वात्। ३ C ऽपटुस्तस्य। ४ A विरतमिति, apparently a mistake for चिरत इति। ५ B आराधनाय स्युः। ६ B omits प्रकृतिः। ७ Corrected; my MSS. read पुरुष। ८ A C ०पत्तिरेव त्वध्यासः।

यद्यात्मा मलिनो ऽस्वच्छो[१] विकारी स्यात्स्वभावतः ।
नहि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥

अत्र प्रमाणं दर्शयति ॥

...... पुंसां कूटस्थचिन्मात्रताबोधकश्रुतेश्च पुरुषस्य स्रष्टृत्वमुपासनार्थमेव श्रुतावुच्यते ॥

कार्यतस्तत्सिद्धिः[२] ॥ ६ ॥

प्रकृतिकार्याणां महदादीनामविच्छेददर्शनात्[३]प्रकृतेर्बन्धसिद्धिः ॥

प्रकृतिः[४] प्रवृत्तिस्वभावत्वात्सर्वपुरुषान्प्रवर्तयेत्, किं विवेकाविवेक[५]दर्शनेनेत्यत्राह ॥

अत्र क्रियासमर्थादित्यादिः ॥

चेतनोद्देशान्नियमः कण्टकमोक्षवत् ॥ ७ ॥

यथा कण्टकं दृष्ट्वा कंचित्कश्चिन्निषेधति 'अनेन वर्त्मना मा गाः', न सर्वान्प्रति, तथाधिकाराच्चेतनविशेषोद्देशात्प्रवर्तनं, न सर्वं प्रतीति नियमः ॥

---

१ A मलिनः स्वच्छो। २ So reads Aniruddha only; the three other commentators have ॰त्सिद्धेः। ३ A C ॰मविच्छेदेन दर्शनात्। ४ B प्रकृतेः। ५ A C विवेकाविवेकि॰।

नात्मनो बन्ध इत्युक्तम्। तदाह ॥

चेततीति[1] चेतनः, विवेकसाक्षात्कारवानित्यर्थः। तस्योद्देशात् तं प्रतीत्यर्थः। प्रकृतेर्नियमः प्रवृत्त्यभावः, यथा कण्टकाभिज्ञं प्रति मोक्षः दुःखप्रयोजकत्वाभावः। प्रकृतेर्हि स्वनिष्ठदुःखमोक्षार्था[2] प्रवृत्तिर्वाच्या। स च विवेकिपुरुषसंबन्धे सति जात एव। इदमेव हि प्रकृतेर्दुःखरूपत्वं यद्दुःखात्मकबुद्धिप्रतिबिम्बरूपदुःखभोगस्य पुरुषनिष्ठस्य प्रयोजकत्वम्। तच्च विवेकिपुरुषस्य दुःखभोगाभावे सति गतमेवेति। स्वनिष्ठप्रयोजनवत्त्वाभावान्मुक्तपुरुषं प्रति न प्रवर्तते, किं त्वमुक्तपुरुषं प्रत्येवेति भावः ॥

अन्ययोगे ऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ॥८॥

प्रवर्तकत्वमेव[3] प्रकृतेर्बन्धाय। प्रकृतियोगे ऽपि[4] तच्छायापत्त्या पुरुषस्य बन्धाभिमानसिद्धिः। नाञ्जस्येन न[5] तत्त्वतः। 'अयोदाहवदि'ति यथा[6] तप्तलोहयोगाल्लोहो दहतीति मन्यते, न च लोहस्य दाहकत्वं, किंतु संयोगादग्नेरेवेति ॥

किमर्थं सृष्टिरित्यत्राह ॥

---

१ C चेतते। २ C ०मोक्षार्थः। ३ A प्रवर्तकमेव। ४ A C त्व instead of ऽपि। ५ न is missing in A। ६ A C तद्यथा।

रागविरागयोर्योगः सृष्टिः[1] ॥ ९ ॥

रागाद्भुक्तिः, वैराग्यान्मुक्तिः। परमार्थतस्तु[2] रागादपि भोगे विषयदोषदर्शनाद्वैराग्यमेवेति ॥

प्रथमाध्याये 'सत्त्वरजस्तम' इत्यादिसूत्रे पञ्चविंशतितत्त्वमुक्तम्। इदानीं सप्रपञ्चं क्रममाह ॥

महदादिक्रमेण[3] पञ्चभूतानाम् ॥ १० ॥

सृष्टिरिति। क्रमं वक्ष्यति ॥

किं स्वार्थं परार्थं वेत्यत्राह ॥

प्रकृतिनिष्ठस्रष्टृत्वान्महदादिनिष्ठस्रष्टृत्वविशेषमाह ॥

आत्मार्थत्वात्सृष्टेर्नैषामात्मार्थ[4] आरम्भः ॥ ११ ॥

पुरुषार्थत्वात्सृष्टेर्नैषां महदादीनामात्मार्थे स्वार्थे[5] आरम्भः। नित्यत्वात्प्रकृतेः स्वार्थारम्भो युक्तः, महदादीनां तु कारणलयेन[6] नाशात्सृष्टिमात्रमिति ॥

दिक्कालौ सिद्धौ, कथं गणनायां न श्रुतावित्यत्राह ॥

---

१ A C रागविरागयोगः सृष्टेः। २ A C परमार्थस्तु। ३ A inserts च. "Nâgeśa has च, instead of पञ्च", Aph.[3] 195, note 1। ४ A C ॰मात्मार्थं। ५ स्वार्थे is missing in B। ६ A कारणान्यायेन, C कारणलन्यायेन!।

ननु दिक्कालौ सकलव्यवहारसिद्धौ कुतो न गणितौ। तत्राह॥

दिक्कालावाकाशादिभ्यः॥ १२॥

तत्तदुपाधिभेदादाकाशमेव दिक्कालशब्दवाच्यम्। तस्मादाकाशे ऽन्तर्भूतौ॥ आदिशब्दः[१] संपातायातः। सप्तम्यर्थे पञ्चमी॥

महतो बुद्धेर्लक्षणमाह॥

आदिशब्देनोपाधयो गृह्यन्ते। तथा च तत्तदुपाधिभ्य आकाशाच्च दिक्कालावुत्पद्येते इत्यर्थः। यद्यप्युपाधिविशिष्टाकाश एव दिक्कालौ, तथापि विशिष्टस्यातिरेकं विशेषणविशेष्योभयजन्यत्वं चाभ्युपेत्यायं जन्यत्वव्यवहारः॥

अथ महदादीन्दर्शयति॥

अध्यवसायो बुद्धिः॥ १३॥

एवमेवेति निश्चयो ऽध्यवसायः॥

धर्मादीनां क्वान्तर्भाव इत्यत्राह॥

तत्कार्यं धर्मादिः॥ १४॥

---

१ B चादिशब्दस्य।

धर्मज्ञानवैराग्यैश्वर्याणि। तत्कार्यत्वेनात्मधर्मत्वं निरस्तम्। कार्यकारणयोरभेदादन्तर्भावो दर्शितः ॥

तस्या[1] विशेषमाह ॥

महदुपरागाद्विपरीतम् ॥ १५ ॥

अधर्माज्ञानावैराग्यानैश्वर्याणि। दृष्टो हि सहकारिभेदात्कार्यभेदः। यथा वेत्रबीजस्य वेत्राङ्कुरजनकत्वं, वह्निसंयोगसहकारिणः कदलीकाण्डजनकत्वं, तथा सत्त्वसहकारिणो महतो धर्मादिजनकत्वं, तमःसहकारिणो ऽधर्मादिजनकत्वमिति ॥

क्रमप्राप्तमहंकारादिलक्षणमाह ॥

अभिमानो ऽहंकारः ॥ १६ ॥

अहमित्यभिमानः ॥

तस्य कार्यमाह ॥

एकादशं[2] पञ्चतन्मात्रं तत्कार्यम् ॥ १७ ॥

एकादशेन्द्रियाणि पञ्च तन्मात्राणि षोडशकं तत्कार्यम्॥

---

१ B C तस्य। २ B एकादशं।

कथमेकस्मात्कारणाज्जडप्रकाशौ भवत इत्यत्राह ॥

सात्त्विकमेकादशकं प्रवर्तते वैकृतादहंकारात् ॥ १८ ॥

महद्विकारादहंकारात्[1] सात्त्विकं सत्त्व[2]सहकृतं एकादशकं[3] एकादशेन्द्रियं प्रवर्तते। तमःसहकृतं तन्मात्रम्॥

इन्द्रियत्रैविध्यमाह ॥

कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् ॥ १९ ॥

कर्मेन्द्रियैर्वागादिभिः पञ्चभिर्बुद्धीन्द्रियैर्घ्राणादिभिः पञ्चभिः सह आन्तरं मन इत्येकादशकमिन्द्रियम्[4] ॥

भौतिकानीन्द्रियाणीति, तत्प्रतिषेधार्थमाह ॥

आहंकारिकत्व[5]श्रुतेर्न भौतिकानि ॥ २० ॥

तत्र च श्रुतिबाधादि[6]त्यर्थः ॥

युक्त्यन्तरमाह ॥

.... अन्नमयत्वादिश्रुतिस्त्वन्नकृतपटुत्वाद्बोध्या ॥

---

१ अहंकारात् is missing in C। २ सत्त्व॰ is missing in B। ३ B एकादशं; in C this word is missing altogether। ४ A इत्येकादशकर्मेन्द्रियं। ५ Corrected; A अहंकारिकत्वं, B C अहंकारिकत्वं। ६ Corrected; A श्रुतिबोधादि॰, B चेतनाबाधादि॰, C श्रुतिविबोधादि॰।

देवतालयश्रुतेर्नारम्भकस्य[१] ॥ २१ ॥

कारणे कार्यलय इति स्थितम्। आदित्यं वै चक्षुर्गच्छतीति[२] देवे[३] लयः श्रूयते। तस्मान्नारम्भकस्य नारम्भकाभिमतस्य भूतस्य[४] कारणत्वमिति ॥

नित्यानीन्द्रियाणीति केचित्, तत्परिहारार्थमाह ॥

तदुत्पत्तिः श्रूयते, विनाशदर्शनाच्च[५] ॥ २२ ॥

अहंकारादुत्पत्तिः श्रूयते। उत्पन्नस्य विनाशो ऽप्यवश्यंभावीति ॥

चक्षुरादीनां शक्तिभेद[६]दर्शनादैन्द्रियकाणीन्द्रियाणीति, तन्निषेधति[७] ॥

अतीन्द्रियमिन्द्रियं, भ्रान्तानामधिष्ठाने[८] ॥ २३ ॥

भ्रान्तानामधिष्ठाने चक्षुर्गोलकादाविन्द्रियज्ञानम्।

---

१ So reads Aniruddha only; the other three commentators have देवतालयश्रुतिर्ना०। २ B चक्षुर्गच्छेति। ३ A B वेदे; cf. Aph.[3] 202, note 1। ४ भूतस्य is missing in B। ५ So reads Aniruddha only; the other commentators have तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च। ६ शक्तिभेद० is missing in B। ७ B तन्निषेधयति। ८ Vijñâna and Nâgeśa read ०धिष्ठानम्, cf. Aph.[3] 204, note 2।

अन्यथा छिन्नकर्णस्य श्रवणानुपपत्तिः, पाटलचक्षुषो रूपग्रहणप्रसङ्गः ॥

एकमिन्द्रियं, उपाधिभेदान्नानात्वमित्यत्राह ॥

शक्तिभेदे ऽपि[1] भेदसिद्धौ नैकत्वम् ॥ २४ ॥

भवतूपाधिभेदः, शक्तिभेदस्त्ववश्यं वक्तव्यः, स च सत्य इति नानात्वमपि सत्यम् ॥

एकत्वेनैवोपपत्तौ[2] बहुत्वकल्पना गुर्वीत्यत्राह ॥

न च नानेन्द्रियकल्पना गुर्वीत्याह ॥

न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥

स्पष्टम् ॥

मनसो लक्षणमाह ॥

विशेषमाह ॥

उभयात्मकं च[3] मनः ॥ २६ ॥

बुद्धीन्द्रियात्मकं[4] कर्मेन्द्रियात्मकं मनो, ऽधिष्ठानादुभयप्रवृत्तेः ॥

---

१ ०भेदे ऽपि is missing in B। २ C एकत्वं नैवोपपत्तौ।
३ Vijñâna omits च। ४ A ०कं०।

कथमेकस्मादहंकारादनेकानीन्द्रियाणीत्यत आह ॥

मनोऽवधानं[1] विनेन्द्रियाणां स्वव्यापाराक्षमत्वात् मन एव ज्ञानेन्द्रियं कर्मेन्द्रियमिति चोच्यते, 'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमि'त्यादिश्रुतेः ॥

एकमनःपरिणामरूपे ज्ञाने कथं नानात्वम्। अत आह ॥

गुणपरिणामभेदान्नानात्वमवस्थावत् ॥ २७ ॥

धर्माधर्मसहकारिसत्त्वादिगुणपरिणामभेदादनेकानि। 'अवस्थावदि'ति[2] यथैकस्य देहस्य बाल्ययौवनवार्द्धकानीति ॥

उभयेन्द्रियविषयमाह ॥

गुणानां[3] सत्त्वादीनां परिणामाश्चक्षुरादयः। तेषां भेदात् नानात्वं नानाविधत्वं ज्ञाने। चाक्षुषादिवृत्तिप्रयुक्तं[4] चाक्षुषत्वादिकमादाय मनःपरिणामभूत एव ज्ञाने चाक्षुषं श्रौतमित्यादिर्व्यवहारः। यथैकस्मिन्नेव देहे तत्तदन्नोपयोगानुपयोगप्रयुक्ताः कृशत्वपुष्टत्वादयोऽवस्था इत्यर्थः ॥

---

१ a मनोविधानं। २ अवस्थावदिति is missing in B।
३ b c गुणादीनां। ४ Corrected; the MSS. चाक्षुष्यादि°।

रूपादिरसमलान्त[1] उभयोः ॥ २८ ॥

उभयोः बुद्धीन्द्रियकर्मेन्द्रिययोः। बुद्धीन्द्रियस्य विषया रूपरसगन्धस्पर्शशब्दाः। कर्मेन्द्रियस्य विषया वचनविहरणादानानन्दरसमलाः। रसमलो नाम मलः, तदन्तः[2] ॥

आत्मेन्द्रिययोर्वैधर्म्यमाह ॥

इन्द्रियाणि कस्योपकारकाणीत्यपेक्षायामाह ॥

द्रष्टृत्वादिरात्मनः[3], करणत्वमिन्द्रियाणाम् ॥ २९ ॥

व्यक्तम्[4] ॥

अन्तःकरणत्रयाणामन्योऽन्यं[5] वैधर्म्यमाह ॥

त्रयाणां स्वालक्षण्यम्[6] ॥ ३० ॥

महदहंकारमनसां स्वालक्षण्यं स्वस्वं लक्षणम्। महतो

---

१ Thus C only; A B and Aph.[3] 207, note 2, ०रसवर्गान्त; the reading given above which is that of the other commentators also, is required by Aniruddha's commentary। २ B परिणामान्न मलानि instead of ०मलाः। रसमलो नाम मलः, तदन्तः। ३ A ०रात्मनां। ४ A व्यक्तः। ५ B C ०मन्योऽन्य०। ६ A स्वलक्षणं।

ऽध्यवसायः, अहंकारस्याभिमानः, मनसः संकल्प इति ॥

एषां साधर्म्यमाह ॥

सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ ३१ ॥

प्राणाद्याः पञ्च[1] वायवस्त्रिभिः करणैर्धार्यन्ते ॥

करणानां[2] वृत्तीराह ॥

क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥

'क्रमशश्च'[3] मन्दालोके चौरं[4] दृष्ट्वेन्द्रियेण वस्तु विचारयति, ततः 'चौरो[5] ऽयमि'ति मनसा संकल्पयति[6], ततो 'धनं गृह्णाती[7]'त्यहंकारेणाभिमन्यते, ततः 'चौरं गृह्णामी'ति[8] बुद्ध्याध्यवस्यति । 'अक्रमशश्च' रात्रौ विद्युदालोके व्याघ्रं दृष्ट्वा झटित्यपसरति । तत्र चतुर्णामेकदा वृत्तिः । यद्यपि वृत्तीनामेकदाऽसंभवात्तत्रापि क्रम एव, तथाप्युत्पलशतपत्रव्यतिभेदवदवभासनादक्रम इत्युक्तमिति[10] ॥

---

१ पञ्च is omitted in B । २ A कारणानां । ३ A क्रमस्च । ४ A चोरं । ५ A चोरो । ६ A C विकल्पयति । ७ B गृह्णामो० । ८ A C चैवं गृह्णातीति । ९ B ०वृत्तिभेद० instead of ०व्यतिभेद० । १० A C add वृत्तय इत्युक्तं ।

कति वृत्तय इत्यचाह ॥

वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च[1] ॥ ३३ ॥

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः । प्रत्यक्षानुमानशब्दाः प्रमाणानि । विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्[2] । विकल्प उभयस्पृग्ज्ञानम्[3] । निद्रा तमोऽवलम्बि ज्ञानम् । स्मृतिरतीतज्ञानम्[4] ॥ क्लिष्टाः क्लेशयुक्ताः रजस्तमोमय्यः । अक्लिष्टाः सत्त्वमय्यो दग्धक्लेशाः ॥

वृत्तिनिवृत्तौ मुक्तिरित्याह ॥

तन्निवृत्तावुपशान्तोपरागः[5] स्वस्थः ॥ ३४ ॥

वृत्तिनिवृत्तौ क्षपिताविद्यास्मितारागद्वेषाभिनिवेशः स्वस्थः स्वरूपं लभते ॥

दृष्टान्तमाह ॥

कुसुमवच्च मणिः ॥ ३५ ॥

---

१ Thus Aniruddha only (B omits च); the three other commentators read क्लिष्टाक्लिष्टाः । २ B ०प्रचिष्टं । ३ ०स्पृग्० is missing in B । ४ B स्मृतिरपि ज्ञानं किं त्वप्रमाणं । ५ A C ०वुपप्रान्तोपक्लेशः ।

यथा जपाकुसुमसंसर्गात्स्फटिके लौहित्यं, तदपगमात्स्फटिकः स्वरूपेणावतिष्ठते, तथा सो ऽपीति ॥

करणानां तुल्यत्वात्सर्वदा तुल्यरूपतेत्यत्राह ॥

पुरुषार्थं करणोद्भवो ऽप्यदृष्टोल्लासात् ॥ ३६ ॥

न तुल्यता, करणोद्भवानुद्भवाभ्यां विशेषात् । विशेषश्चादृष्टोल्लासात् बलवत्तरत्वात् ॥

दृष्टान्तमाह ॥

धेनुवद्वत्साय ॥ ३७ ॥

यथा धेनुत्वेन तुल्यत्वे ऽपि या क्षीरिणी सा वत्सं पुष्णाति ॥

बाह्यान्तर[1]भेदात्कति करणानीत्यत्राह ॥

यथा वत्सार्थं धेनुः लक्षणया धेनुपयो ऽचेतनमपि स्वयमेव स्रवति, नान्ययत्नमपेक्षते. . . .[2] ॥

करणं त्रयोद[3]शविधमवान्तरभेदात्[4] ॥ ३८ ॥

---

१ C बाह्यावान्तर° । २ The rest from Vijñâna । ३ A त्रयोदप्रम° । ४ "The reading of Vedânti Mahâdeva, and

अन्तर्बुद्ध्यहंकारमनांसि। बाह्यानि [1]दशेन्द्रियाणि॥

इन्द्रियेषु कथं करणत्वमित्यत्राह॥

मनो ऽहंकारो[2] बुद्धिरित्यन्तःकरणत्रयं, बाह्यानि च दशेति त्रयोदश करणानि॥

ननु बुद्धेरन्येषां च समानमेव करणत्वमुतास्ति कश्चिद्विशेषः। अस्तीत्याह॥

इन्द्रियेषु साधकतमत्वयोगात्कुठारवत्[3] ॥ २९॥

यथा साधकतमत्वेन कुठारे करणत्वं, तथेन्द्रियेष्वपीति॥

त्रयोदशकरणानां कार्यमाह॥

फलायोगव्यवच्छिन्नस्यैव करणत्वात् प्रहार एव छिदां प्रति मुख्यं करणत्वं[4], कुठारे तु [5]प्रकृष्टसाधनत्वगुणयोगात् अमुख्यं तत्। एवं बुद्धावेव पुरुषार्थं प्रति फलायोगव्यवच्छिन्नत्वात् मुख्यं करणत्वं अन्येषु तु पुरुषार्थसाधकतमत्वगुणयोगात् अमुख्यं करणत्वमित्येतयोरध्याहारः। अर्थात् बुद्धावेव मुख्यं करणत्वमिति भावः॥

---

of him alone, is त्रयोदशविधं बाह्यान्तरभेदात्" Aph.[3] 214, note 2। १ C omits दश। २ ऽहंकारो is omitted in b। ३ Thus Aniruddha only; B has साधकतमत्वगुणयोगात्कुठारवत्, the reading of the other commentators। ४ a मुख्यकरणं, c मुख्यत्वं। ५ c कृष्ट०।

नन्विन्द्रियान्यत्वादहंकारोऽपि मुख्यं करणं स्यात्, न बुद्धिरेवेत्यत आह ॥

द्वयोः प्रधानं मनो लोकवद्भृत्यवर्गेषु ॥ ४० ॥

द्वयोः बुद्धीन्द्रियकर्मेन्द्रिययोः प्रधानं मनः, तदधिष्ठानादेवैषां प्रवृत्तेः, यथा लोके भृत्येषु स्वामी ॥

युक्तिमाह ॥

द्वयोर्बुद्ध्यहंकारयोर्मध्ये मनो बुद्धिरेव ·····[1] ॥

अव्यभिचारात्[2] ॥ ४१ ॥

व्यक्तम् ॥

युक्त्यन्तरमाह ॥

[3]तथाशेषसंस्काराधारत्वात् ॥ ४२ ॥

नष्टेन्द्रियाणामपि संस्कारदर्शनात्[4] ॥

न्यायमाह ॥

स्मृत्यानुमानाच्च ॥ ४३ ॥

---

१ The rest from Vijñâna। २ A अव्यभिचारी। ३ A यथा॰। ४ A संस्कारादर्शनात्।

[1]इन्द्रियं विनापि[2] स्मृतिदर्शनान्मनो ऽनुमीयते ॥
आत्माधारः[3] संस्कार इत्यत्राह ॥

संभवेन्न स्वतः ॥ ४७ ॥

स्वत आत्मनो न संभवेत्, कूटस्थनिर्गुणत्वात्[4] ॥
करणत्वे तुल्ये किंनिबन्धनो गुणप्रधानभाव इत्यत्राह ॥

आपेक्षिको गुणप्रधानभावः[5], क्रियाविशेषात् ॥ ४८ ॥

स्पष्टम् ॥
निरभिसंधानान्नापरः[6] परार्थं प्रवर्तेत इत्यत्राह ॥

तत्कर्मार्जितत्वात्तदर्थमभिचेष्टा[7] लोकवत् ॥ ४९ ॥

बुद्धिप्रतिबिम्बितपुरुषकर्मार्जितत्वात् पुरुषार्थमभिचेष्टा प्रवर्तनं बुद्ध्यादीनाम् । [8]यथा लोके येनार्जितो भृत्यस्तत्कर्म करोति ॥

---

१ A has संस्कार, C संस्कारं before इन्द्रियं । २ B omits अपि । ३ B आत्माधार°, C आत्माकरः । ४ B °निर्गुणात् । ५ A गुणप्रवाहभावः । ६ A °संधानानापरः, B °संधानान्न परः । ७ Nâgeśa has °र्थमपि चेष्टा; cf. Aph.[3] 221, note 1 । ८ B omits the text from यथा to लोकवत् at the end of

सर्वत्र बुद्धेः प्राधान्यमित्याह[1] ॥

**समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ॥४७॥**

यथा लोके ग्रामाध्यक्षाद्राज्याध्यक्षः[2] श्रेष्ठः, तस्मादपि राजेति, तथा[3] मनो बुद्ध्यर्थं प्रवर्तत इति सर्वप्रधाना बुद्धिरिति। समानकर्मयोगे पुरुषार्थतुल्यक्रियायोगेऽपि सर्वेषामिति ॥ लोकवदिति वीप्साध्यायपरिसमाप्तौ ॥

सर्वेषां करणानां[5] समाने ऽपि कर्मजन्यत्वे उक्तप्राधान्यहेतुभिर्बुद्धेरेव प्राधान्यम्। यथा लोके विवाहादिक्रियायोगसाम्ये ऽपि काचिदेव नायिका प्रधानं प्राधान्यप्रयोजकगुणैर्नान्याः, तद्वत् ॥

---

इति कापिलसांख्यप्रवचनसूत्रवृत्तौ प्रधानकार्याध्यायो द्वितीयः ॥ प्रधानकार्यनिरूपणानन्तरं वैराग्यार्थं तृतीयाध्यायारम्भः ॥

इति वेदान्तिमहादेवोन्नीते सांख्यप्रवचनवृत्तिसारे द्वितीयो ऽध्यायः। प्रधानकार्यनिरूपणानन्तरं वैराग्यार्थं तृतीयाध्यायारम्भः ॥

---

the next aphorism, and reads instead मनः प्रधानं मनोव्यापारेषु अहंकारः अहंकारव्यापारे बुद्धिः। १ C बुद्धिः प्रधानमित्याह। २ B ग्रामाध्यक्षाद्व्याध्यक्षः। ३ तथा is missing in A। ४ C पुरुषार्थं। ५ A कारणानां।

अविशेषाद्विशेषारम्भः ॥ १ ॥

अविशेषात् भूतसूक्ष्मात् विशेषस्य महाभूतस्यारम्भः[१] ॥

तस्माच्छरीरस्य ॥ २ ॥

तस्य मांसादिमयविचारान्निर्विद्यते ॥

उत्पत्तिर्दर्शिता, नाशः कुत्रेत्यत आह ॥

[२]चर्मादिमयस्यारम्भ इत्यनुषज्यते ॥

शरीरारम्भे कारणमाह ॥

तद्बीजात्संसृतिः ॥ ३ ॥

तस्य भूतारम्भस्य कारणात् धर्माधर्मात् संसरणं नाशः ॥

भूतानामारम्भकस्य भावत्वे सर्वदारम्भादनिर्मोक्ष इत्यचाह ॥

तस्य शरीरस्य बीजात् कर्मणः सूक्ष्मदेहाद्वा संसृतिस्तत्तद्देहावच्छिन्नसुखदुःखोपभोगादिरूपा ॥

---

१ This commentary is copied by Mahâdeva ।

२ Corrected; a b कर्मादि, c कंसादि ।

ननु भूतसूक्ष्माणामारम्भकत्वे सर्वदा बन्धप्रसङ्ग इत्यतो ऽवधिमाह ॥

[1]आ विवेकाच्च प्रवर्तनमविशेषाणाम् ॥ ४ ॥

विवेकज्ञानपर्यन्तमारम्भक[2]स्वभावत्वं भूततन्मात्राणामिति[3] ॥

अविवेकिनं प्रत्यारम्भकत्वे[4] महाप्रलये ऽपि तं प्रत्यारम्भकत्वं[5] स्यादित्याह ॥

विवेकज्ञानपर्यन्तमारम्भकत्वं भूतसूक्ष्माणामित्यर्थः ॥

नन्वविवेकिनं प्रत्यारम्भकत्वे महाप्रलये ऽपि तं प्रत्यारम्भकत्वं कुतो नेत्यत आह ॥

[6]उपभोगादितरस्य ॥ ५ ॥

अविवेकिन उपभोगान्महाप्रलये शरीराभावात्कुत उपभोग इति न तं प्रत्यारम्भकत्वम् ॥

अनारम्भकत्वे[7] तु कुतो विशेषादविवेकिनं प्रति[8] पुनरारम्भकत्वमित्यत्राह ॥

---

१ A B a अविवेकाच्च । २ B अविवेक॰ in place of आरम्भक॰ । ३ B omits इति । ४ B प्रत्यारम्भत्वे । ५ A ऽपि तंचस्यारंभकत्वं । ६ A यदुपभोगा॰ । ७ B अनारंभत्वे । ८ C प्रभो इति instead of प्रति ।

इतरस्य अविवेकिन उपभोगात् उपभोगसमाप्तेः पूर्वस्य भोगप्रद-कर्मणो नाशे प्रलय इति भोगाभावे किमर्थं शरीरमिति भावः ॥

सृष्टौ पुनरारम्भकत्वं कथम्। तत्राह ॥

संप्रति परिष्वक्तो[१] ह्याभ्याम् ॥ ६ ॥

**धर्माधर्माभ्याम्। गमागमपरिष्वङ्गो[२] प्रलये ऽपि धर्माधर्मानुबद्ध आत्मेति[३] तं प्रति पुनरारम्भः। मुक्तौ न तथेति ॥**

**नित्यत्वे तु मुक्तेः कथं[४] पारतन्त्र्यमित्यत्राह ॥**

संप्रति सृष्टिकाले। द्वाभ्यां धर्माधर्माभ्याम्। परिमुक्तो बद्ध इत्यर्थः, आङ्पूर्वस्येव परिपूर्वस्यापि बन्धनार्थत्वात्। प्रलये सुप्तयोः धर्माधर्मयोः सृष्टिकाले फलोन्मुखयोः सतोः शरीरमारभ्यते। मुक्तौ तु धर्माधर्मयोर्नाश एवेति भावः ॥

स्थूलसूक्ष्मशरीरयोर्वैलक्षण्यमाह ॥

मातापितृजं स्थूलं प्रायशः, इतरन्न तथा ॥ ७ ॥

---

१ So reads Aniruddha only; Mahâdeva has, like Vijñâna and Nâgeśa, परिमुक्तो। २ A युक्तमार्गमपरिष्वक्तिं, C अपरिष्वक्तं। ३ C प्रेति instead of धर्माधर्मानुबद्ध आत्मेति; ४ A puts कथं before मुक्तेः।

प्रायश इति दृश्यत्वात्। इतरत् सूक्ष्मशरीरं न तथा, दुरूहत्वात्॥

द्वयोर्देहयोः कस्य भोग इत्यत्राह॥

स्थूलमपि किंचन मातापितृजं न भवतीति प्रायश इत्युक्तम्। न तथा न मातापितृजम्॥

तयोरेव पौर्वापर्यं भोगव्यवस्थां चाह॥

पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य॥ ८॥

पूर्वोत्पत्तेः सूक्ष्मशरीरस्य। भोगादेकस्य तस्य, नेतरस्य[1] स्थूलस्य, तत्कार्यत्वम्। स्थूलशरीरस्य गौणो भोगः, मृतशरीरे भोगादर्शनात्॥

कतिभिस्तत्त्वैः सूक्ष्मशरीरारम्भ इत्यत्राह॥

पूर्वोत्पत्तेः सूक्ष्मशरीरस्य तत्कार्यत्वं स्थूलशरीरस्य। भोगादिति पञ्चमी प्रथमार्थे। भोग एकस्य सूक्ष्मस्य, नेतरस्य स्थूलस्य, मृतशरीरे भोगादर्शनादित्यर्थः॥

लिङ्गशरीरस्वरूपमाह॥

सप्तदशैकं लिङ्गम्॥ ९॥

---

१ A सूक्ष्मेतरस्य, C सूक्ष्मशरीरस्य, instead of नेतरस्य।

सप्तदश च एकं च[1] अष्टादश। तैर्लिङ्गं[2] सूक्ष्मदेह उत्पद्यते। बुद्ध्यहंकारमनांसि पञ्च सूक्ष्मभूतानि दशेन्द्रियाणीति ॥

सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात्कथं पुत्तिकाहस्तिदेहानां विसदृशानां[3] तस्मादुत्पत्तिरित्यत्राह ॥

सप्तदशैकं[4] चेति समाहार[5]द्वन्द्वः। बुद्ध्यहंकारमनांसि पञ्च सूक्ष्मभूतानि दशेन्द्रियाणीति सूक्ष्मं लिङ्गमिति चोच्यते ॥

सूक्ष्मदेहस्य सर्वत्र तुल्यत्वात्स्थूलवैसादृश्यं[6] कुत इत्यत आह ॥

व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥

व्यक्तम् ॥

यद्यात्मान्यः, कथं देहे[7] ऽहमित्यभिमान इत्यत्राह ॥

व्यक्तयः स्थूलदेहाः। भेदो वैलक्षण्यम् ॥

देहे ऽहमिति वादः कथम्। तत्राह ॥

तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः ॥ ११ ॥

---

१ च is missing in B। २ B अष्टादशैर्लिङ्गं instead of अष्टादश। तैर्लिङ्गं। ३ A विसदृशां। ४ a c सप्तदशकं। ५ b समाहारं। ६ a वैसादृश्यं। ७ °हे is missing in A।

आत्माधिष्ठानाश्रये देहे [1]संभोगादात्मवादाद्देहे ऽह-
मित्यभिमानवादः[2] ॥

अत्र दृष्टान्तमाह ॥

तदित्यात्मपरामर्शः । पूर्वस्मात्पूर्वस्मादहमिति वादात् उत्तरउत्तरो ऽहमिति वादः । वाद इत्यभेदेन देहे ऽहमिति ज्ञानस्य भ्रमत्वमाह, आत्मनो देहातिरिक्तत्वात् ॥

देह एवाहंप्रत्ययविषयो ऽस्तु, तस्यैवात्मत्वादिति निरस्यति ॥

न स्वात्मत्वं तदृते छायावच्चित्रवच्च ॥ १२ ॥

यद्यात्मना[3] विना देहे ऽहमिति प्रत्ययः, तदा मृतदेहे ऽहमिति प्रत्ययः स्यात् । न चैवम् । यथावरकेण[4] विना न छाया, भित्तिं विना न चित्रं, तथात्रापि ॥

सूक्ष्मदेह एवात्मा भविष्यतीत्यत्राह ॥

तदृते आत्मसत्त्वं विना स्वयमेव देहो नाहंप्रतीतिविषयः, मृतदेहे ऽप्यहमिति प्रत्ययापत्तेः । यथावरकं विना न छाया, भित्तिं[5] विना न चित्रमिति ॥

सूक्ष्मदेहस्यात्मत्वं दूषयति ॥

---

१ B C भोगादा० । २ A C ०त्यभिमानः । ३ B यद्यात्मनो । ४ A C ०वरकेन! । ५ b भित्तिं ।

मूर्तत्वे ऽपि न, संघातयोगात्तरणिवत् ॥ १३ ॥

संघातत्वान्मूर्तः, मूर्तत्वात्परार्थः[१]। 'तरणिवदि'ति यथा प्रकाशत्वे ऽपि मूर्तत्वान्नादित्यस्यात्मत्वम् ॥

मन आत्मा भविष्यतीत्यत्राह ॥

मूर्तत्वे ऽपि सक्रियत्वे ऽपि। अनेन सूक्ष्मदेहे प्रमाणमुक्तम्। सूक्ष्मदेहो ऽपि नात्मा, संघातयोगात् संहतत्वात् संहतत्वस्य परार्थत्वव्याप्यत्वात्। तदतिरिक्त आत्मेत्यर्थः। तरणिः प्रकाशः प्रत्यक्षो ऽपि परार्थः ॥

मनस आत्मत्वं निरस्यति ॥

अणुपरिमाणं तत्कृतिश्रुतेः[२] ॥ १४ ॥

मनो ऽणुपरिमाणं तत्क्रियायां[३] श्रुतिदर्शनात्। व्यापकस्य निरुपाधेर्नेन्द्रियत्वमित्युपाधिर्वक्तव्यः। यदि कर्णशष्कुलीवन्नियतावयवस्योपाधित्वं[४], तदा तावन्मात्रे वृत्तिलाभो नान्यत्रेति श्रोत्रवत्प्रसज्येत। ततश्च देहमात्रमुपाधिर्वक्तव्यः। तथा च तदवच्छेदेन वृत्तिलाभे 'शिरसि मे वेदना' 'पादे मे सुखमि'त्यव्याप्यवृत्तित्व-

---

१ This first clause is omitted in B। २ "The reading तद्वृतिश्रुतेः, on which Vijñâna remarks, is accepted by Nâgeśa", Aph.³ 234, note 3। ३ A तत्क्रियाया। ४ A C °यतावयस्यो°।

प्रतीतिविरोधः ॥ युगपज्ज्ञानानुत्पत्तेरपि[१] मनसोऽणुत्वमाह । न्यायश्चान्यत्र प्रपञ्चित इति ॥

हेत्वन्तरमाह ॥

तत् मनः अणुपरिमाणं[२] अल्पं, क्वतिश्रुतेः क्रियाश्रवणात्, आत्मनश्च व्यापकत्वात् ॥

मनसोऽन्नमयत्वश्रुतेरपि नात्मत्वमित्याह ॥

तदन्नमयत्वश्रुतेः[३] ॥ १५ ॥

तस्य मनसोऽन्नमयत्वे श्रुतिरस्ति। अन्नमयत्वेन च[४] सौम्यत्वं दर्शितम्। सौम्यत्वं च चन्द्ररूपत्वमिति। न चात्मा चन्द्रः[५] ॥ श्रुतिश्च 'अन्नं वै प्राणाः'। प्राणश्च चन्द्रमयो ज्ञेयः। चन्द्रमा मनसो जातः, तस्मादणु मनो, नात्मेति ॥

पुरुषार्थं महदादीनां प्रवृत्तिः संसृतिः किमर्थमित्यत्राह ॥

'अन्नमयं हि सोम्य मन' इति श्रुतिः ॥

प्रधानस्येव भूतसूक्ष्माणामपि प्रवृत्तिः पुरुषार्थैवेत्याह ॥

---

१ B °नुत्पत्तिरपि। २ a °री°। ३ Mahâdeva reads, like Vijñâna, °श्रुतेश्च। ४ च is omitted in A C। ५ This clause is omitted in A C।

पुरुषार्थं संसृतिर्लिङ्गानां सूपकारवद्राज्ञः[1] ॥ १६ ॥

यथा प्रवृत्तिस्तया संसृतिः। संसृतौ[2] च मरणदुःखमिति निर्विण्णो[3] भवति। 'सूपकारवद्' इति परार्थमेव प्रवृत्तिः ॥

विप्रतिपत्तौ सत्यां स्वपक्षमाह ॥

संसृतिः प्रवृत्तिः। लिङ्गानां भूतसूक्ष्माणाम् ॥

पाञ्चभौतिको देहः ॥ १७ ॥

स्पष्टम् ॥

का विप्रतिपत्तिरित्यत्राह ॥

चातुर्भौतिकमित्यन्ये[4] ॥ १८ ॥

आकाशपरित्यागेन चातुर्भौतिकं शरीरमित्यन्ये ॥

मतान्तरमाह ॥

ऐकभौतिकमपरे[5] ॥ १९ ॥

---

१ A ०कारवद्या। २ A B सृतौ। ३ A निर्विन्नो। ४ B ०मित्येके, the reading of Mahâdeva and of the other commentators। ५ B ०कमित्यपरे, the reading of Mahâdeva and of the other commentators; cf. Aph.[3] 237, note 4।

पार्थिवं[1] शरीरमिति ॥

देहचैतन्यं निरस्यति ॥

स्पष्टानि। उत्तरयोः शरीरं विशेष्यम् ॥

देहाकारपरिणतानां भूतानां चैतन्यं धर्म इति निरस्यति ॥

न सांसिद्धिकं चैतन्यं प्रत्येकादृष्टेः ॥ २० ॥

[2] पृथक्पृथक्कृतेषु[3] चैतन्यादर्शनान्न स्वभावचैतन्यम्। अत एव मिलितानां च चैतन्यं नाशङ्कनीयम्। जन्तवो हि प्रत्येकं क्षुद्रजन्तुसंयमनशक्तिमन्तो मिलितास्ते हस्तिनमपि संयमयन्ति, न चैवं भूतानीति। न देहचैतन्यम् ॥

दूषणान्तरमाह ॥

स्वाभाविकं धर्मभूतम्। मिलितानां हि तदा भवेत्, यदि प्रत्येकं किंचिद्दृश्येत ॥

प्रपञ्चमरणाभावश्च[4] ॥ २१ ॥

---

१ A पार्थिव०। २ B begins the commentary with यथा। ३ C पृथक्पृथग्वृत्तिषु। ४ B प्रपञ्चमरणाद्यभावश्च, the reading of Mahâdeva and of the other commentators।

देहस्य चेतनत्वे प्रपञ्चत्वस्य[1] मरणस्याभावः, चेतनस्य[2] नित्यत्वात्। अथ चेतनस्यापि मरणं मुक्तिरिति ॥

दूषणान्तरमाह ॥

देहस्य चैतन्ये[3] तस्यैवात्मत्वे च प्रपञ्चस्य धर्माधर्मयोर्मरणस्य देह-वियोगरूपस्य, आदिशब्दात् देहान्तरसंयोगस्य च, अभावः प्रसज्येत। न चेष्टापत्तिः, सर्वस्य प्रामाणिकत्वात् ॥

यथा प्रत्येकमशक्ता अपि बहवो मादकपदार्था मदशक्तिमु-द्वहन्ति, तथा भूतानि मिलितानि चेतयन्ते इत्यत आह ॥

मदशक्तिवच्चेत्, प्रत्येकपरिदृष्टे [4]सौक्ष्म्यात्सांहत्ये तदुद्भवः ॥ २२ ॥

यथा मदशक्तिः प्रतिपुरुषे सूक्ष्मत्वेन दृष्टा, सांहत्ये महच्छक्त्युद्भवाद्बृहच्छिलामपि वहन्ति। न च भूतेष्वपि प्रत्येकं सूक्ष्म[5]चैतन्यं दृष्टं, येन सांहत्ये देहे[6] चैतन्यं स्यात्। 'न सांसिद्धिकमि'ति सूत्रे निषिद्धं निषेध-मुखेन[7] दर्शितं भवति, इह सूत्रे विधिमुखेनेति न पुनरुक्तम् ॥

---

१ B प्रपञ्चस्य। २ A चैतन्यस्य। ३ b inserts तु। ४ Vijñâna and Nâgeśa omit सौक्ष्म्यात्; cf. Aph.[3] 239, note 3। ५ B सूत्रं। ६ A देह। ७ A C विधिमुखेन।

वैराग्यादीनां पारंपर्येण मुक्तिसाधनत्वमुक्तम् । साक्षान्मुक्तिसाधनमाह ॥

तत्र प्रत्येकपरिदृष्टे सूक्ष्मसामर्थ्ये सति, सांहत्ये समुदाये सति मदशक्तेरुद्भव आधिक्यम् ॥

साक्षान्मुक्तिसाधनमाह ॥

ज्ञानान्मुक्तिः ॥ २३ ॥

व्यक्तम् ॥

व्यतिरेकमाह ॥

बन्धहेतुमाह ॥

बन्धो विपर्ययात् ॥ २४ ॥

अज्ञानात् ॥

न ज्ञानमात्रान्मुक्तिः, कर्मणोऽपि मुक्तिसाधनत्वात् । तथा च श्रुतिः 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति । तत्राह ॥

विपर्ययात् अज्ञानात् ॥

ज्ञानकर्मणोर्व्यवस्थामाह ॥

नियतकारणत्वान्न[1] समुच्चयविकल्पौ ॥ २५ ॥

---

१ A नियतकारणज्ञानान्न ।

नियतमेव कारणम्। ज्ञानान्मुक्तिः, कर्मणो भुक्तिः[१]। यत्राप्यकामकर्मणः[२] समुच्चयः श्रूयते, तत्रापि ज्ञानार्थं, तस्मान्न समुच्चयः[३]। नापि कदाचिज्ज्ञानात् कदाचित्कर्मण इति विकल्पः। श्रुतिश्च

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यते ऽयनाय॥

दूषणान्तरमाह॥

ज्ञानं मुक्तिहेतुः, कर्म न मुक्तिहेतुः। अतो मुक्तौ न ज्ञानकर्मणोः समुच्चयः, न वा विकल्पः॥

ननु मास्तु काम्यकर्मणा समुच्चयः, नित्येन तु स्यात्। अत आह॥

स्वप्नजागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य॥ २६॥

मायिकः स्वप्नः, अमायिको जागरः। स्वप्नवत्कर्म, जागरवज्ज्ञानम्। तुल्यकालयोर्हि समुच्चयः, न तु स्वप्नजागरयोस्तुल्यकालत्वं, तस्मान्न ज्ञानकर्मसमुच्चयः॥

---

१ A मुक्तिः। २ B कर्म instead of कर्मणः। ३ B समुच्चये।

प्रत्ययत्वात्स्वप्नप्रत्ययवत् जागरप्रत्ययस्यापि[1] मिथ्या-त्वमित्यत्राह ॥

मायिकं कर्म, अमायिकं ज्ञानम्। स्वप्नजागराभ्यामिव भिन्नकालाभ्यां न[2] ताभ्यां मुक्तिः। नोभयोरेककालत्वं, येन समुच्चयः स्यात्॥ नित्यकर्मापि चित्तशुद्धावेवोपयुज्यते, न तु मुक्ताविति ॥

कर्मणो मायिकत्वं न[3] मिथ्यात्वं, किं त्वनात्यन्तिकफलत्व-मित्याह ॥

इतरस्यापि नात्यन्तिकम् ॥ २७ ॥

स्वप्नप्रत्ययस्यापि नात्यन्तिकं मिथ्यात्वं, खपुष्पवत्, न च[4] स्वात्मन्यपि मिथ्यात्वं, अन्यथा स्वप्न इत्येव न स्यात्। न चात्यन्तादृष्टे स्वप्नः, किं तु जाग्रदृष्टे ऽर्थे ॥

दृष्टकारणाभावात् संकल्पमात्रेण योगिनां न सर्वा सिद्धि[5]रित्यत्राह ॥

इतरस्यापि कर्मणो ऽपि नात्यन्तिकं फलं, अतो मायिकत्वमुक्तम्। एतेन ज्ञानस्यामायिकत्वं व्याख्यातम् ॥

योगिनः संकल्पमात्रेण सिद्धे पदार्थे ऽपि न मिथ्यात्वमित्याह॥

---

१ B जाग्रत्प्रत्ययस्यापि। २ c omits न। ३ a omits न, c puts it behind मिथ्यात्वं। ४ B वा। ५ B सर्वसिद्धि०।

संकल्पिते ऽप्येवम् ॥ २८ ॥

**नास्मदादीनां संकल्पात्सिद्धिरिति योगजधर्मोपगृहीतानां सिद्धानामपि न भवितव्यम्। तस्मान्न मिथ्येति[१] ॥**

**एतदेवाह[२] ॥**

न मिथ्यात्वमिति बुद्धिस्थम् ॥

ननु क्लृप्तदृष्टकारणाभावे जायमानस्य कथं न मिथ्यात्वम्। तत्राह ॥

भावनोपचयाच्छुद्धस्य[३] सर्वं प्रकृतिवत् ॥ २९ ॥

**यथा महदादीनां पूर्वमपेक्ष्य कार्यकरणं, प्रकृतेस्तु न कार्यकरणे कस्याप्यपेक्षा, तथा दृष्टकारणाभावादपि[५] योगिनां भावनोपचयात्सर्वं संपद्यते ॥**

**भावनार्थं ध्यानमाह ॥**

शुद्धस्य प्राणायामादिभिर्योगिनः। भावनायाः ध्यानस्य, उपचयात् आधिक्यात्। एवं सर्वं संपद्यते, न तत्र दृष्टकारणापेक्षा। नास्मदादिवद्वितथसंकल्पो योगीति भावः। 'प्रकृतिवत्' प्रकृतिर्यथानपेक्ष्यैव पूर्वं[६] कारणं महदादि कार्यं करोति तद्वत् ॥

---

१ तस्मान्न मिथ्येति is omitted in A। २ B तदेवाह। ३ B बुद्धस्य instead of शुद्धस्य। ४ A दृष्टा०। ५ A ०भावि instead of ०भावादपि। ६ b पूर्वं०।

ध्यानमाह ॥

[1]रागापहतिर्ध्यानम् ॥ ३० ॥

रागात् रजोगुणाच्चलितत्वं[2], तदपहतिर्निश्चलितत्वं ध्यानम् ॥

तत्सिद्धिः कथमित्यत आह ॥

रागस्य रजोगुणस्य उपहतिः, निश्चलत्वमिति यावत् ॥

तदुपायमाह ॥

वृत्तिनिरोधात्तत्सिद्धिः ॥ ३१ ॥

वृत्तयः प्रमाणादयः[3] पञ्च, तन्निरोधात् तत्सिद्धिः ध्यानसिद्धिः ॥

तन्निरोधः कथमित्यत आह[4] ॥

वृत्तयः प्रमाणादयः, तन्निरोधात् ध्यानसिद्धिः ॥

वृत्तिनिरोधोपायमाह ॥

धारणासनस्वकर्मणा तत्सिद्धिः ॥ ३२ ॥

---

१ B रागोपहति॰, the reading of Mahâdeva and of the other commentators; C is totally corrupt here। २ A C insert त्वध्यानं here। ३ B प्राणादयः। ४ B C कथमित्यत्राह।

धारणा[1] नाभ्यादिदेशे[2] चित्तधारणम्। आसनं स्वस्तिकादिः[3]। अनेन यमनियमप्राणायामप्रत्याहारा उपलक्षिताः। स्वकर्म स्वजातिविहितकर्मानुष्ठानम्। इति वृत्तिनिरोधसिद्धिः[4] ॥

नानासनेषु स्वमतमासनमाह ॥

धारणं नाभ्यादिदेशे चित्तधारणम् ॥

आसनमाह ॥

स्थिरसुखमासनम् ॥ ३३ ॥[5]

येन स्थैर्यं सुखं च[6] स्यात्तदासनमनुष्ठेयम् ॥

अन्यं निरोधोपायमाह ॥

स्पष्टम् ॥

वृत्तिनिरोधे उपायान्तरमाह ॥

निरोधश्छर्दिविधारणाभ्याम् ॥ ३४ ॥

---

१ C धारणं। २ A भ्यासादि०। ३ B omits the Visarga। ४ B omits निरोध। ५ Vijñâna and Nâgeśa transpose aphorisms 33 and 34। ६ B omits च।

छर्दिः रेचकम्[१]। विधारणं कुम्भकम्[२]। उपलक्षणमेतत्। पूरको ऽपि द्रष्टव्यः ॥

किं तत्स्वकर्मेत्यत आह[३] ॥

वृत्तीनामित्यादि ॥ छर्दिः रेचकः[४]। विधारणं कुम्भकः। पूरकस्याप्युपलक्षणम्। प्राणायामैरित्यर्थः ॥

स्वकर्म व्याचष्टे ॥

स्वकर्म स्वाश्रमविहित[५]कर्मानुष्ठानम् ॥ ३५ ॥

स्पष्टम् ॥

अन्यं वृत्तिनिरोधोपायमाह[६] ॥

वृत्तिनिरोधोपायान्तरमाह ॥

वैराग्यादभ्यासाच्च ॥ ३६ ॥

वैराग्याद्द्विविधात्, अपरादलमिति प्रत्ययात्, परा[७]ज्ज्ञानप्रसादमात्रात्। अभ्यासात् पौनःपुन्येन ध्यानात्। चः समुच्चये ॥

---

१ Thus all three MSS; the masculine form only is given in the Petersburg Dictionary। २ A कुंभक। ३ A C कर्मेत्याह। ४ C रेचक। ५ C °विह्नितं। ६ B °निरोधस्योपायमाह। ७ B omits परात्।

वृत्तीनामवान्तरभेदमाह ॥

वैराग्यादलंप्रत्ययात्, तदभ्यासाच्च ॥

विपर्ययभेदाः पञ्च ॥ ३७ ॥

अविद्या मिथ्याज्ञानं, अस्मिता अभिमानः, रागः अनुरागः, द्वेषः क्रोधः, अभिनिवेशः चास[1] इति विषयेण[2] विषयि ज्ञानमुपलक्षितम्[3] ॥

अशक्तिमाह ॥

अशक्तिरष्टाविंशतिधा[4] ॥ ३८ ॥

तुष्टिमाह ॥

तुष्टिर्नवधा ॥ ३९ ॥

सिद्धिमाह ॥

सिद्धिरष्टधा ॥ ४० ॥

---

१ The commentary is so far repeated by Mahâdeva।
२ A विषये, B विप्रियेण। ३ B ॰लक्षयति। ४ Mahâdeva and the other three commentators add तु; the statement in Aph.³ 248, note 4, is not confirmed by my MSS. with regard to Mahâdeva।

चतुर्धा विपर्ययभेदमाह[1] ॥

चतुर्षु विपर्ययभेदानवान्तरानाह ॥

अवान्तरभेदाः[2] पूर्ववत् ॥ ४१ ॥

पूर्ववदिति पूर्वाचार्यैरुक्ताः[3]। द्वाषष्टिर्विपर्ययभेदाः। प्रकृतिमहदहंकारपञ्चतन्मात्रेष्वात्मबुद्धिरविद्या तमो ऽष्टविषयत्वादष्टधा। देवा ह्यणिमादिकमात्मीयत्वेनाभिमन्यन्ते, सेयमस्मिता मोहो ऽष्टविषयत्वादष्टधा। शब्दादिषु तन्मात्रेषु पञ्चसु[5] दिव्यादिव्यतया[6] रागो महामोहो दशविषयत्वाद्दशधा। शब्दादयो दश, अणिमाद्यष्टैश्वर्योपधानेन[8] सहिताः, ते चान्येनोपहन्यमाना इति द्वेषस्तामिस्र अष्टादशविषयत्वादष्टादशधा। देवा ह्येतानुपभुञ्जाना असुरैरुपहन्यन्त[9] इत्यभिनिवेशस्त्रास अन्धतामिस्रो ऽष्टादशविषयत्वादष्टादशधा। एवं द्वाषष्टिरिति ॥

---

१ A चतुर्ध्ववान्तरविषयभेदमाह, C चतुर्धा अवान्तरभेदमाह। २ A C ॰भेदात्। ३ B ॰रुक्तं। ४ Corrected; the MSS. द्वाषष्टिवि॰। ५ A पञ्च, C पर्वसु। ६ There is a large lacuna in C, beginning here and reaching into the commentary to aphorism 54; this defect is clearly due to the want of two leaves in the codex archetypus। ७ दशविषय॰ is missing in A। ८ A ॰पधाने। ९ B ॰रुपाहन्यन्ते।

अशक्तिभेदानाह ॥

विपर्ययस्या[१]वान्तरभेदाः पूर्वाचार्यैर्यथोक्तास्तथा बोध्याः । तथा हि, पञ्चानां विपर्ययभेदानां अविद्यास्मितारागद्वेषाभिनिवेशानां तमः मोहः महामोहः तामिस्रः अन्धतामिस्र इति क्रमेण नामानि । अव्यक्तमहदहंकारपञ्चतन्मात्रेष्वनात्मसु आत्मबुद्धिरविद्या तमः, सा चाष्टविधविषयत्वादष्टविधा । [२]देवा अष्टविधमैश्वर्यमासाद्यामृतत्वा[३]भिमानिनो ऽणिमादिकमात्मीयं शाश्वतं मन्यन्ते, सेयमस्मिता मोहः, साप्यष्टविधैश्वर्यविषयत्वादष्टविधा[४] । शब्दादिपञ्चसु, दिव्यादिव्यतया दशविधेषु, राग आसक्तिर्महामोहः, स च दशविधवि[५]षयत्वाद्दशविधः । शब्दादयो दश, अणिमादयो ऽष्टौ, परस्परेणोपहन्यमानाः कोपनीया भवन्तीति, तद्विषयो द्वेषस्तामिस्रो ऽष्टादशविधविषयत्वादष्टादशविधः । देवा अणिमादिकमैश्वर्यमासाद्य शब्दादीन्विषयान्भुञ्जानाः 'शब्दादयो भोग्याः तदुपाधयश्चाणिमादयो ऽस्माकमसुरैर्जातूपहन्येरन्निति बिभ्यति, सो ऽयं त्रासो ऽभिनिवेशो महातामिस्रः, सो ऽप्यष्टादशविधविषयत्वादष्टादशविध इति संकलनया[६] द्विषष्टिर्विपर्ययभेदाः ॥

अशक्तेर्भेदानाह ॥

---

१ a c विपर्यस्या० । २ a inserts शब्दादिपञ्च here । ३ ०त्व० is effaced in c । ४ c ०विधी । ५ a ०धि०; in b, धि is corrected in ध । ६ a संकल्पनया; this is corrected in संकलनया (c) in b ।

एवमितरस्याः ॥ ४२ ॥

इतरस्याः अशक्तेः, एवं अनेकधाष्टाविंशतिधा । एकादशेन्द्रियवधाः[1]

बाधिर्यं[2] कुष्ठितान्धत्वं[2] जडताजिघ्रता[3] तथा ।
मूकताकौण्यपङ्गुत्वक्लैब्योदावर्तमुग्धताः[5] ॥

एतद्विषया एकादश बुद्धेः । नव तुष्टयः, अष्ट सिद्धयः, तद्विपर्ययेण सप्तदश बुद्धेः । एवमष्टाविंशतिरिति ॥

तुष्टिभेदानाह[6] ॥

पूर्वाचार्योक्ता एवाशक्तेर्भेदा ज्ञेयाः । ते च 'बाधिर्यं ...... मुग्धता'[7] इत्येकादशेन्द्रियवधाः । तुष्टयो नव, सिद्धयो ऽष्टौ, तद्विपर्ययेण सप्तदश बुद्धेर्वधाः । इत्यष्टाविंशतिधा बुद्धेरशक्तिः ॥ जडता रसाज्ञानं, कौण्यं ग्रहणासामर्थ्यं, उदावर्तो विसर्गासामर्थ्यं, मुग्धता विषयाग्रहणम् ॥

तुष्टिभेदानाह ॥

आध्यात्मिकादिभेदान्नवधा तुष्टिः ॥ ४३ ॥

अनात्मन्यात्मबुद्ध्या प्रवर्तमाना आध्यात्मिकाश्चतस्रः ।

---

१ A पंचधाः instead of वधाः । २ B omits the Anusvâra । ३ B जडत्वा॰ । ४ A a c ॰पङ्गुत्वं । ५ B omits the Visarga । ६ A ॰भेदमाह । ७ The same S'loka as in Aniruddha's commentary.

आदिशब्दाद्बाह्याः पञ्च ॥ प्रकृतिविवेकदर्शनाच्चेन्मुक्तिः, सैवोपास्या, किमात्मनेति प्रकृत्याख्या एका तुष्टिरम्भ इत्युच्यते। विवेकज्ञानादपि न साक्षात्, अदर्शनात्[1], व्रतग्रहणाद्भविष्यती[2]त्युपादानाख्या द्वितीया तुष्टिः[3] सलिलमुच्यते। व्रतादपि न साक्षात्, किं तु कालाद्भवतीति कालाख्या तृतीया तुष्टिरोघ इत्युच्यते। कालवशादपि न सर्वेषां मुक्तिः, किं तु भाग्यादेवेति[4] भाग्याख्या चतुर्थी[5] तुष्टिर्वृष्टिरित्युच्यते। आत्मानमधिकृत्येत्याध्यात्मिकाः ॥ पञ्चधा विषयोपरमाद्बाह्याः[6] पञ्च। विषयार्जनदुःखादुपरमे एका तुष्टिः पारमुच्यते। रक्षणदुःखादुपरमे द्वितीया तुष्टिः सुपारमुच्यते। क्षयं भावयतो दुःखादुपरमे तृतीया तुष्टिः पारपारमुच्यते। भोगदोषं भावयतो दुःखादुपरमे चतुर्थी तुष्टिरनुत्तमाम्भ उच्यते। नानुपहत्य[8] भूतानि भोगसिद्धिरिति दुःखादुपरमे पञ्चमी तुष्टिरुत्तमाम्भ उच्यते ॥ एवं नवधेति ॥

---

१ B साक्षाद्दर्शनात्। २ °ती° is missing in A। ३ द्वितीया तुष्टिः is only found on the margin of B। ४ A भावादेवेति। ५ A चतुर्थं। ६ A ग्राह्याः instead of बाह्याः। ७ A transposes the two words: तुष्टिश्चतुर्थी। ८ A नानुपहृत्य।

सिद्धेर्भेदानाह[1] ॥

तुष्टयो द्विधा, आध्यात्मिका बाह्याश्च। तत्र प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य प्रवृत्ता आध्यात्मिकाश्चतस्रः, प्रकृत्युपादानकालभाग्यनामानः ॥ तत्र प्रकृतितुष्टिर्यथा, प्रकृतिव्यतिरिक्ते आत्मनि ज्ञाते 'विवेकसाक्षात्कारो हि प्रकृतिपरिणामः, तं च प्रकृतिरेव करिष्यतीति तदर्थमलं ते ध्यानाभ्यासेन, तस्मादेवमेवास्स्वे'ति[2] कस्यचिदुपदेशात् शिष्यस्य तुष्टिः, इयमेवाम्भ इत्युच्यते ॥ उपादानतुष्टिर्यथा[3], 'प्राकृत्यपि विवेकख्यातिर्न प्रकृतिमात्राद्भवति (मा भूत्सर्वस्य सर्वदा) प्रकृतिमात्रस्य सर्वान्प्रत्यविशेषात्। प्रव्रज्याहेतुका तु सा। तस्मात्प्रव्रज्यामुपाददीथाः, कृतं ते ध्यानाभ्यासेने'त्युपदेशात्तुष्टिः[4], सा च[5] सलिलमुच्यते ॥ कालतुष्टिर्यथा, 'प्रव्रज्यापि सद्यो निर्वाणदा न[6] भवति, किं तु कालमपेक्ष्येति कालात्ते सिद्धिर्भविष्यति, अलमुत्तप्ततया तवे'त्युपदेशात्तुष्टिरोघ उच्यते ॥ भाग्य[7]तुष्टिर्यथा, 'कालादपि न सर्वेषां मुक्तिः, अपि तु भाग्यादेव कस्यचित्। अत एव[8] मदालसापत्यानां बाल्ये ऽपि मातुरुपदेशमात्रादेव[9] विवेकख्यातिलाभेन मुक्तिरभूत्। तस्माद्भाग्यमेव हेतुर्नान्य' इत्युपदेशात्तुष्टिर्वृष्टिरित्युच्यते ॥ बाह्याः पञ्च अनात्मनः प्रकृतिमहदहंकारादीनात्मेत्यभिमन्यमानस्यैव विषयोपरमे सति संभवन्ति[10]।

---

१ Corrected; the MSS. °र्भेदमाह। २ b c °मेवास्वेति। ३ b उपादाने। ४ b °त्युपदेशे तुष्टिः। ५ b omits सा च। ६ b puts न before सद्यो। ७ b भाग्या। ८ a c omit एव। ९ b omits एव। १० c भवन्ति।

तथा हि, शब्दादिषु पञ्चस्वपि विषयेषु अर्जनरक्षणक्षयभोगहिंसा-दोषदर्शनजन्मानः पञ्चोपरमा भवन्ति। तेषु च पञ्च तुष्टयो भवन्ति। स्रक्चन्दनवनिताद्यर्जने बहुदुःखमनुसंदधतो विषयोपरमे तुष्टिरेका। अर्जितमपि धनादिकं राजादिभ्यो[1] विनङ्क्ष्यतीति तद्रक्षणे [2]महद्दुःखमिति भावयतो[3] विषयोपरमे तुष्टिर्द्वितीया। अत्यायासेनार्जितं रक्षितं च तद्भुज्यमानं[4] क्षीयत एवेति क्षयं भावयतो विषयोपरमे तुष्टिस्तृतीया।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव[5] भूय एवाभिवर्धते॥

इत्युक्तेर्भोगाभ्यासात्कामा वर्धन्ते, ते च विषयाप्राप्तौ[6] कामिनं दुःखयन्तीति भोगदोषं भावयतो विषयोपरमे तुष्टिश्चतुर्थी। नानुपहत्य भूतान्युपभोगः संभवतीति हिंसादोषदर्शनाद्विषयोपरमे तुष्टिः पञ्चमी। एताश्च क्रमेण पारं, सुपारं, पारपारं, अनुत्तमाम्भः, उत्तमाम्भ[7] इति चोच्यन्ते। इति नव तुष्टयः॥

सिद्धेर्भेदानाह॥

ऊहादिभिः सिद्धिरष्टधा[8] ॥ ४४ ॥

---

१ a चोरादिभ्यो। २ b मद्दुःखमिति। ३ भावयतो is missing in b। ४ b c ०माने। ५ a ०वर्त्मैव। ६ b विषयप्राप्तौ। ७ a उत्तमाम्भश्च; श्च is obliterated in b। ८ This is the reading of Aniruddha only; the three other commentators omit अष्टधा।

ऊहस्तर्को मननमित्येका सिद्धिस्तारमुच्यते। शब्द-ज्ञानं द्वितीया सिद्धिः सुतारमुच्यते। अध्ययनं तृतीया सिद्धिस्तारतारमुच्यते। गुरुब्रह्मचारिणां प्राप्तिश्चतुर्थी[१] सिद्धी रम्यकमुच्यते। बाह्यान्तःशुद्धिः पञ्चमी सिद्धिः सदामुदितमुच्यते। आध्यात्मिकदुःखविघातः षष्ठी सिद्धिः प्रमोदमुच्यते। आधिभौतिकदुःखविघातः सप्तमी सिद्धिर्मुदितमुच्यते। आधिदैविक[२]दुःखविघातो ऽष्टमी सिद्धिर्मोदमानमुच्यते। एवमष्टधेति॥ प्राधान्येन विपर्ययाशक्तितुष्टिसिद्धिरिति चतुष्प्रकारो[३] अवान्तरभेदात्पञ्चाशत्॥

उत्तरेण पूर्वपरि[४]त्यागात्सिद्धिरित्याह॥

ऊहादिभेदैरष्टधा सिद्धिरित्यर्थः। ते च ऊहः शब्दो ऽध्ययनं त्रयो विघाताः सुहृत्प्राप्तिर्दानं चेति। अथ श्रौतक्रमात्पदार्थक्रमो बलवानित्यभिप्रेत्य क्रमान्तरेण व्याख्यायन्ते॥ तत्राद्या सिद्धिरध्ययनं नाम। विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणं तारमुच्यते॥ द्वितीया सिद्धिः शब्दः। शब्द इति तज्जनितार्थज्ञानं सुतारमुच्यते॥ तृतीया ऊहस्तर्कः, आगमाविरोधिन्यायेनागमार्थपरीक्षणं, यदिदं मननमाहुः। सा [५]तारतारमुच्यते॥ सुहृत्प्राप्ति-

---

१ Corrected; A ॰श्चतुर्थं, B ॰श्चतुर्थी। २ A आधिदैव॰। ३ A चतुःप्रकारा। ४ A पर्ववत्परि॰। ५ Corrected; the MSS. तारतरमु॰।

स्तुर्थी । न्यायेन परीक्षितमप्यर्थं न तावच्छ्रद्दधते यावद्गुरुशिष्यसब्रह्मचारिभिः सह न संवाद्यते,[1] तस्मात्सुहृदां गुर्वादीनां प्राप्तिरावश्यकीति । सा च रम्यकमुच्यते ॥ दानं पञ्चमी सिद्धिः । दानं च विवेकज्ञानस्य शुद्धिः, 'दैप्[2] शोधने' इत्यस्माद्दानपदोत्पत्तेः । यदाह [3]पतञ्जलिः 'विवेकख्यातिरविप्लवा हानोपाय' इति । अविप्लवः शुद्धिः, सा च सवासनसंशयविपर्यासपरिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहे ऽवस्थानं, इयं तु न विनादरनैरन्तर्यदीर्घकालसेविता[4]भ्यासपरिपाकाद्भवतीति दानेन कार्येण सो ऽपि संगृहीतः । सेयं सदामुदितमुच्यते ॥ इमास्च पञ्चामुख्याः सिद्धयो हेतुत्वात् । तिस्रः पुनः फलत्वान्मुख्याः, आध्यात्मिकदुःखविघातः आधि[5]भौतिकदुःखविघातः आधि[5]दैविकदुःखविघातश्चेति । इमाश्च क्रमेण प्रमोदमुदितमोदमाननामानः[6] ॥ एवं पञ्च विपर्ययभेदाः, अशक्तिरष्टाविंशतिधा, तुष्टिर्नवधा, सिद्धिरष्टधेति पञ्चाशत्पदार्थाः ॥

विपर्ययाशक्तितुष्टयश्च हेया इत्याह ॥

नेतरादितरहानेन विना ॥ ४५ ॥

इतरात् अशक्तितः इतरहानेन विपर्ययहानेन विना न सिद्धिः । एवं तुष्टितो ऽशक्तिहानेन विना न सिद्धिः । एवं तद्धानेन विनेति ॥

---

१ b संराद्यते, c संबाद्यते । २ b देय् । ३ c पात॰; this is corrected in पत॰ in b । ४ a ॰निता॰, c ॰स्यनिता॰ in place of ॰सेविता॰ । ५ a b अधि॰ । ६ b ॰मोदमानः ।

सर्गे सति वैराग्यम्[1] । कति सर्गभेदा इत्यत्राह ॥

इतरासां विपर्ययाशक्तितुष्टीनां हानेन विना । इतरात् इतरस्मात्[2] अहानात् । सिद्धयो न भवन्तीति शेषः । आसां सिद्धिपरिपन्थिनीत्वादिति भावः ॥ इतरादिति छान्दसम् । इतरेत्यत्र सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥

सृष्टिभेदमाह ॥

दैवादिप्रभेदा[3] ॥ ४६ ॥

आदिशब्दात् षड्भेदाः । तथा च

दैवादौ षड्विधश्च स्यात्संसारः कर्मसंभवः ।
सुरो ऽसुरो नरः[4] प्रेतो नारकस्तिर्यकस्तथा[5] ॥

स्थावराणां[6] नारकेष्वन्तर्भावः ॥

प्रकृतेः प्रवृत्तिशीलत्वात्सर्वदा सृष्टौ न मुक्तिरित्यत आह[7] ॥

सृष्टिरिति शेषः। आदिशब्दात्तैर्यग्योनो मानुष्यश्च। ब्राह्मः प्राजापत्य ऐन्द्रः पैत्रो गान्धर्वो याक्षो राक्षसः पैशाच इत्यष्टविधो दैवः। पशुमृगपक्षिसरीसृपस्थावरा इति पञ्चविधस्तैर्यग्योनः। एकविधो

---

१ A योग्यं instead of वैराग्यं। २ a इतरादुत्तरस्मात्। ३ A ०प्रभेदाः। ४ A वरः। ५ B ०स्तिर्यक् तथा। ६ B स्थावरादीनां। ७ A ०रित्यत्राह।

मानुष्यः। ब्राह्मणत्वाद्यवान्तरजातिभेदाविवक्षया संस्थानस्य चतुर्ष्वपि वर्णेष्वविशेषात्। इति समासतो भौतिकः सर्गः ॥

प्रकृतेः प्रवृत्तिशीलत्वात्सर्वदा सृष्टौ कथं मुक्तिरित्यत आह ॥

आब्रह्मस्तम्बपर्यन्तं तत्कृते सृष्टिरा विवेकात् ॥४७॥

तत्कृते पुरुषकृते मोक्षार्थं सृष्टिः। विवेकपर्यन्तं प्रकृतेः शीलमिदं विवेकज्ञानं यावत्प्रवर्तते, स्वभावस्यानपायित्वात् ॥

कुत्र कथं सृष्टिरित्यत्राह ॥

विवेकज्ञानपर्यन्तमेव प्रकृतिः प्रवर्तते स्वभावात् ॥

कुत्र कथं सृष्टिरित्याह ॥

ऊर्ध्वं सत्त्वविशाला ॥ ४८ ॥

देवलोके ॥

नागलोके सृष्टिमाह ॥

तमोविशाला मूलतः ॥ ४९ ॥

पाताले ॥

---

१ A सत्य०।

मर्त्यलोके सृष्टिमाह ॥

मध्ये रजोविशाला ॥ ५० ॥

विशाला उद्रिक्ता[१] ॥

नन्वेकैकस्वगुणानामन्योऽन्यमिथुनभावात्कथं प्रकृतेः[२] सृष्टिवैचित्र्यमित्यत्राह ॥

भुवःप्रभृतिसत्यान्ता[४] सत्त्वबहुला । मूलतः सृष्टिः पश्वादिस्थावरान्ता तमोबहुला । मध्ये[५] रजोबहुला, धर्माधर्मानुष्ठानपरत्वाद्दुःखबहुलत्वाच्च[६] ॥

एकस्याः प्रकृतेः सृष्टिवैचित्र्यं कथम् । तदाह ॥

कर्मवैचित्र्यात्प्रधानचेष्टा गर्भदासवत् ॥ ५१ ॥

यथा गर्भदासो विचक्षणो विचित्रं कर्म कुरुते प्रभोरर्थाय, तथा प्रधानं पुरुषार्थं विचित्रां सृष्टिं कुरुते कर्मवैचित्र्यात् कर्मलाभात् ॥

उत्तरोत्तरभूमिलाभात्कृतकृत्यस्य किं मोक्षेणेत्यत आह[७] ॥

---

१ B उद्रिक्ताः । २ ०स्व० is corrected; A ०त्व०, B ०त्वं० । ३ B transposes कथं प्रकृतेः । ४ a b सत्यंता । ५ c inserts किं तु here । ६ a ०बहुला, c ०बहुलत्वाच्च । ७ A ०त्यत्राह ।

गर्भदासो यथा विचित्रं कर्म कुरुते प्रभोरर्थे तद्वत् ॥

ननु कर्मवैचित्र्यादुत्तरोत्तरभूमिलाभे किं मोक्षेणेत्यत आह ॥

आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥

उत्तरोत्तरविशिष्टजन्मलाभे ऽपि संसारे आवृत्तिः । तस्माद्धेयः संसारः ॥

एतदेवाह ॥

उत्तरोत्तरविशिष्ट[1]जन्मलाभे ऽप्यावृत्तिर्यतो, ऽतः संसारो हेयः ॥

समानं[2] जरामरणादिजं दुःखम् ॥ ५३ ॥

आब्रह्मस्तम्बपर्यन्तम् ॥

कारणे प्रकृतौ लयादेव कृतकृत्यस्य किं मोक्षेणेत्यत आह ॥

स्पष्टम् ॥

प्रकृतिलयात्कृतकृत्यतां निरस्यति ॥

न कारणलयात्कृतकृत्यता मग्नवदुत्थानात् ॥ ५४ ॥

---

१ a b उत्तरविशिष्ट॰ । २ Aसमान; "Mahâdeva has, instead of समानं, सर्वत्र" Aph.³ 256, note 3 ।

भवेदेवं, यदि प्रकृतिलीनस्य न पुनरावृत्तिः। न त्वेवं, पुनरावृत्तिश्रुतेः। तथा च[1]

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं,[2] सहस्रं त्वाभिमानिकाः[3] ॥
बौद्धा दश सहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः।
निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यते ॥

यथा स्नानार्थं मग्नस्य पुनरुत्थानं, तथा प्रकृतिलीनस्येत्यर्थः ॥

नित्यत्वाद्यथा नात्मनो[4] बन्धस्तथा प्रधानस्यापीत्यत आह[5] ॥

'पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तका' इत्युक्तेः कारणलीनस्य मग्नवत्पुनरुत्थानप्रतीतेः। 'निर्गुणं पुरुषं प्राप्य कालसंख्या न विद्यत' इत्युक्तेस्तु न मुक्तौ पुनरावृत्तिः ॥

ननु प्रकृतिपुरुषयोर्नित्यत्वाविशेषे कुतः प्रकृतेरेव स्रष्टृत्वम्। तत्राह ॥

अकार्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५ ॥

---

१ B वा instead of च। २ B पुण्यं। ३ A चा०। ४ B नित्यत्वादात्मनो न। ५ B ०त्यत्राह।

अकार्यत्वमप्रयोजकं, किं तु परतन्त्रत्वं, तच्च प्रकृतावस्तीति। तद्योगाच्च बन्ध[1]योगः ॥

पर[2] आत्मा किंरूप इत्यत आह ॥

अकार्यत्वे ऽपि नित्यत्वे ऽपि तद्योगः स्रष्टृत्वयोगः पारवश्यात् परार्थत्वात् ॥

प्रकृतेरचेतनाया अधिष्ठाता चेतनः कश्चिदस्ति, स च सर्ववित्सर्वकर्तेति मतं दूषयति ॥

स हि सर्ववित्सर्वकर्ता ॥ ५६ ॥

प्रकृतिप्रतिबिम्बितत्वादेवमभिमानः ॥

तात्त्विकमेव कर्तृत्वं भवतु, किं प्रतिबिम्बकल्पनया, तथा च न्यायाभिमत एवेश्वरो ऽस्तीत्यत आह ॥

स हीति प्रकृतिपदार्थ एवेत्यर्थः। प्रकृतेः परिणामित्वेन ज्ञानवृत्तिरूपपरिणामसंभवादिति भावः ॥

ईश्वरकारणत्वप्रतिपादकश्रुत्यादीनामप्ययमे[3]वार्थ इत्याह ॥

ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥

---

१ बन्ध is missing in A। २ A C प्रवृत्त। ३ Here begins a lacuna in b which extends as far as प्रधान॰ in Aphorism 58; in place of the omitted text, the following words are given: ॰पि प्रकृतिपरत्वेनैव निर्वाहः।

यद्यस्मदभिमत आत्मेश्वरो, भवतु। न्यायाभिमते च[1] प्रमाणं नास्ति। एतच्च प्रथमाध्याये 'ईश्वरासिद्धेरि'ति सूत्रे वर्णितम्। द्वितीयाध्याये 'वि[2]मुक्तविमोक्षार्थमि'ति सूत्रे स्वार्थं परार्थं च प्रधानप्रवृत्तिरित्युक्तम्। अत्र [3]स्वार्थस्य गौणत्वम्॥

परार्थत्वमेवाह॥

सिद्धिः ज्ञानं, सिद्धा प्रमाणजन्या॥

प्रधानं किमर्थं प्रवर्तते। तत्राह॥

प्रधानसृष्टिः परार्थं स्वतो ऽप्यभोक्तृत्वादुष्ट्रकुङ्कुम[4]वहनवत्॥ ५८॥

चेतनस्यापि परार्थं प्रवृत्तिर्दृश्यते, [5]यथोष्ट्रः कुङ्कुमं वहति। [6]अचेतनायास्तु प्रकृतेरभोक्तृत्वात्परार्थमेव प्रवर्तनमिति॥

चेतनस्य प्रवृत्तिर्दृष्टा, नाचेतनस्येत्यत्राह॥

परार्थं पुरुषार्थम्। अपिरेवार्थे। स्वतः अभोक्तृत्वादेवेत्यर्थः॥

---

१ B ०भिमतमेव। २ B पि० instead of वि०। ३ A चन्नस्या०। ४ ०वहन० is omitted in A। ५ Here begins a lacuna in A, reaching to the end of Aphorism 59। ६ The latter half of the commentary, together with the Avatârana, is omitted in C।

उष्ट्रकुङ्कुमवदिति दृष्टान्तेन चेतनस्यैव परार्थप्रवृत्तिमाशङ्क्याह ॥

अचेतनत्वे ऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ५९ ॥

यथा क्षीरमचेतनं वत्सार्थं प्रवर्तते, तथा प्रधानं पुरुषार्थं प्रवर्तते ॥

दृष्टान्तान्तरमाह ॥

यथा चीरं वत्सविवृद्ध्यर्थं प्रवर्तते ॥

दृष्टान्तान्तरमाह ॥

कर्मवद्दृष्टेर्वा[१] कालादेः[२] ॥ ६० ॥

यथा कृषीवलेन कृतं[३] कर्म धान्यारोपणादि[४] कालादेव फलति, [५]न च वृक्षाश्चेतनाः । आदिशब्दाद्[६]दृष्टं ग्राह्यम् ॥

उष्ट्रस्यापि ताडनादिभयाभिसंधानात्प्रवृत्तिर्दृश्यते, न चा[७]चेतनायाः प्रकृतेरभिसंधानमस्तीत्यत्राह ॥

---

१ A कर्मकरकृष्टं वा, C कर्मकरकृतवद्वा; Mahâdeva's reading is, as his explanation shows, कर्मवद्दृष्टेर्वा which is given quite clearly in c । २ Cf. Aph.[3] 262, note 3 । ३ A कृत । ४ B धान्यारोपादि । ५ There is a lacuna in A, extending down to दृश्यते in the next Avatâraṇa । ६ ०द० is missing in B । ७ च is omitted in B ।

क्रियते उप्यते इति कर्म । कृषीवलेनोप्यमानं बीजादि वृष्टिमपेक्ष्य कालादृष्टे वा[1]पेक्ष्य वृक्षादिरूपेण परिणमते, तथा प्रधानमपि ॥

उष्ट्रस्य ताडनभियापि कुङ्कुमवहनं घटते, प्रकृतेरचेतनत्वेन तु न[2] स्वार्थानुसंधानमित्यत आह ॥

स्वभावाच्चेष्टितमनभिसंधानाद्भृत्यवत् ॥ ६१ ॥

यथा गर्भदासभृत्यः[3] स्वामिन्यभिसंधान[4]शून्यः स्वभावादेव कार्यं करोति, तथा प्रकृतिरिति[5] ॥

पक्षान्तरमाह ॥

गर्भदासो हि स्वभावादेव स्वामिकार्यं करोति, न स्वार्थमनुसंधायेति प्रसिद्धम् ॥

कर्माकृष्टेर्वानादितः ॥ ६२ ॥

अनादित्वात्संसारस्य धर्माधर्माकर्षणात्प्रधानं प्रवर्तते[7], यथा पुंसां कर्मवशादचेतना[8] अपि[6] वृक्षाः फलन्तीति ॥

---

१ b कालवृष्टे वा॰; the reading given above (a c) is corrected in कालादृष्टेर्वा in c । २ तु न is omitted in a b । ३ A गर्भभृत्यः । ४ A ॰भिसाधन॰, B ॰भिमान॰ । ५ इति is omitted in B । ६ अपि is omitted by the three other commentators, cf. Aph.[3] 264, note 1 । ७ B वर्तते । ८ B ॰वशादेवाचेतना ।

युक्तिबहुत्वात्पुनर्वचनं न[१] पुनरुक्तादोषायेत्यत आह[२] ॥

अनादित्वात्संसारस्य धर्माधर्मापोद्वलितं प्रधानं प्रवर्तत इत्यर्थः ॥

अतकत्वो ऽपि पथ्यं वदितव्यमित्याशयेनाह ॥

विविक्तबोधात्सृष्टिनिवृत्तिः[३] प्रधानस्य सूदवत्पाके ॥ ६३ ॥

पुरुषार्थं सृष्टिः । तन्निवृत्तिस्तु[४] प्रकृतिपुरुषविवेकज्ञानात्, यथा सूपकारः पाकं कृत्वा निवर्तते ॥

उपदेशाद्विवेकज्ञाने ऽपि मुक्तिर्न दृश्यत इत्यत्राह[५] ॥

यथा सूपकारः पाकं कृत्वा निवर्तते ॥

सत्यपि विवेकज्ञाने कुतो न मुक्तिरित्याशङ्क्याह ॥

इतर इतरज्जहाति तद्दोषात्[६] ॥ ६४ ॥

न यथा कथंचिद्बोधमात्रान्मुक्तिः, किं त्विन्द्रियादितर

---

१ पुनर्वचनं न is missing in B; A has पुनरवचने न। २ A °त्यत्राह, C °त्याह। ३ A °निर्वृत्तिः। ४ B omits तु। ५ B इत्यर्थः, C इत्याह। ६ B इतर इतरत्तद्दोषात्, cf. Aph.[3] 265, note 3; this reading is peculiar to Aniruddha; the other commentators have इतर इतरवत्तद्दोषात् (my MSS. a b of Mahâdeva omit तत्)।

आत्मा इतरत्प्रधानं[1] जहाति ध्यानादिना पृथक्करोति, तद्दोषात् प्रकृतेश्चलत्वादिदोषदर्शनात् ॥

मोक्षस्वरूपमाह ॥

इतरः केवलविवेकज्ञानवानपि इतरवत् विवेकज्ञानरहितवत्, तस्य विवेकज्ञानस्य दोषात् संशयविपर्यासरूपात् । तथा च विवेकज्ञानस्य शुद्ध्यर्थं तत्त्वाभ्यासे यतनीयमिति भावः ॥

मोक्षस्वरूपमाह ॥

द्वयोरेकतरस्य[2] वौदासीन्यमपवर्गः ॥ ६५ ॥

द्वयोः प्रकृतिपुरुषयोः । प्रकृतेरौदासीन्यं विवेकिनं प्रत्यप्रवर्तनं[3], पुरुषस्यौदासीन्यं प्रकृत्यनभिषङ्गः[4] । 'एकतरस्ये'त्यात्मनः[5], तस्यैव मुख्यत्वात् ॥

प्रकृतेः प्रवृत्तिशीलाया औदासीन्ये सर्वमुक्तिप्रसङ्ग इत्यत्राह ॥

विवेकिनं प्रत्यप्रवृत्तिः प्रकृतेरौदासीन्यं, प्रकृत्यनभिष्वङ्गः पुरुषस्य । एकतरस्य आत्मनः, मुख्यत्वात्तस्य ॥

प्रकृतेरौदासीन्ये सर्वमुक्तिः स्यात् । अत आह ॥

---

१ A B insert न here । २ A C द्वयोरितरस्य । ३ A ॰प्रवर्तने । ४ A B ॰नभिसंगः । ५ Corrected ; A इतरस्योपात्मनः, B एकतरस्यत्यागात्मनः, C इतरस्येत्यात्मनः ।

अन्यसृष्ट्युपरागे ऽपि न[1] विरज्यते[2], प्रबुद्धरज्जुतत्त्वस्यै[3]वोरगः ॥ ६६ ॥

न प्रवृत्तिशीलाया औदासीन्यं, स्वभावत्यागदोषात् । किं तु विवेकिनं प्रत्य[4]प्रवर्तने [5]ऽज्ञान्प्रति सृष्ट्युपरागे ऽपि सृष्टिकरणे[6] ऽपि न विरज्यते सृष्टौ न प्रवर्तते । यथा रज्जौ सर्पभूते प्रबुद्धरज्जुतत्त्वक[7]स्यै[8]वोरगः सर्पभ्रमो निवर्तते, न त्वज्ञातरज्जुतत्त्वस्य ॥

अत्र न्यायमाह ॥

उपरागः करणम् । ज्ञानिनं प्रत्यौदासीन्ये ऽपि अज्ञानिनः प्रति प्रवर्तते । दृष्टान्तः स्पष्टः ॥

कर्मनिमित्तयोगाच्च ॥ ६७ ॥

विवेकिनं प्रति कर्मणो निमित्तस्याभावात् न बीजं विनाङ्कुरो भवति । श्रुतिरपि

---

१ "Nâgeśa has अन्यसृष्ट्युपरागान्न" Aph.[3] 267, note 2 । २ Mahâdeva विरमते ऽ॰, Nâgeśa निवर्तते ऽ । ३ Vijñâna perhaps ॰स्ये॰ ; cf. the different notes in Aph.[3] । ४ A प्रति instead of प्रत्य॰ । ५ C ॰त्व॰ instead of the Avagraha । ६ Corrected; the MSS. ॰कारणे । ७ B omits ॰क॰ । ८ A B ॰स्ये॰ ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

अदृष्टस्य[1] बुद्धिकार्यत्वादहंकाराद्युत्पत्तौ भवत्वदृष्ट-[2]सहायता, प्रकृतेः स्वकार्यकरणे क्वादृष्टसहकारितेत्यत्राह ॥

सृष्टौ हि कर्मापि निमित्तमित्युक्तम् । तच्चाज्ञानिनो ऽस्ति[3], ज्ञानिनो नास्ति, 'क्षीयन्ते चास्य कर्माणी'ति श्रुतेः ॥

अदृष्टस्याकारणत्वे ऽप्याह ॥

नैरपेक्ष्ये[4] ऽपि प्रकृत्युपकारे ऽविवेको निमित्तम् ॥ ६८ ॥

अदृष्टनैरपेक्ष्ये[5] ऽपि प्रकृतेरविवेकः सहकारीति ॥

प्रकृतिनिवृत्तिं दृष्टान्तेनाह ॥

अदृष्टनैरपेक्ष्ये ऽप्यविवेकः प्रकृतिप्रवृत्तावपेक्षितः ॥

प्रकृतेर्निवृत्तिं दृष्टान्तेनाह ॥

---

१ B ऋदृष्ट । २ There is a lacuna in A, extending to the next ऋदृष्ट in this commentary । ३ a omits ऋज्ञानिनो ऽस्ति । ४ B C नैरपेक्ष्ये । ५ A C insert ०प्य० । ६ B C ०नैरपेक्ष्ये । ७ B प्रकृतेः, C प्रवृत्त० ।

नर्तकीवत्प्रवर्तकस्यापि[1] निवृत्तिश्चारितार्थ्यात् ॥ ६९ ॥

यथा नर्तकी परिषच्चारितार्थ्यान्निवर्तते, तथा प्रकृतिरपि पुरुषस्य विवेकचारितार्थ्यात्सर्गान्निवर्तते ॥

निवृत्तापि प्रकृतिः कुतो ऽपि कारणात्प्रवर्तिष्यत इत्यत्राह ॥

नर्तकी यथा सभ्यान्प्रत्यात्मानं प्रदर्श्य नृत्यान्निवर्तते, तथा प्रधानमपि ॥

नर्तकीवत्पुनः कदाचित्प्रवर्तिष्यते । नेत्याह ॥

दोषबोधे[2] ऽपि नोपसर्पणं प्रधानस्य, कुलवधूवत् ॥ ७० ॥

स्वदोषविज्ञानाद्विवेकेन प्रकृतेर्नोपसर्पणं[3], यथा कुलवधूः परपुरुषेण[4] दृष्टा 'न पुनस्तद्दर्शनं मे[5] भविष्यती'-त्यवहित्थां[6] कुरुते ॥

यस्य बन्धस्तस्य मोक्षः । न च पुरुषस्य तौ स्त इत्यत्राह ॥

---

१ B प्रवृत्तस्यापि, the reading of the other commentators। २ A बोधो। ३ A प्रकृतेर्नापिसर्पणी, C प्रकृतेनापिसर्पणं। ४ A ०न instead of ०ण। ५ B omits मे। ६ C ०त्यवाहित्या।

विवेकज्ञानाच्च दोषबोधे सति उपसर्पणं नैवेत्यर्थः। कुलवधूर्यथा 'परपुरुषेण दृष्टाहमि'ति जानाना नोपसर्पति तम् ॥

बन्धमोक्षौ च पुरुषस्याविवेकादेव, न तु स्वाभाविकावित्याह ॥

नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते ॥ ७१ ॥

प्रकृतिपुरुषाविवेकाद्[1]बन्धमोक्षावित्यभिमानमात्रमिति॥

असत्यस्य[2] सत्यपूर्वकत्वात् कस्य बन्धमोक्षौ सत्यावित्यत्राह ॥

एकान्ततः स्वाभाविकौ ॥

प्रकृतौ स्वाभाविकावित्याह ॥

प्रकृतेराञ्जस्यात्ससङ्गत्वात्, पशुवत् ॥ ७२ ॥

आञ्जस्यात् तत्त्वतः। ससङ्गत्वात् गुणयोगात्। यथा पशुः सङ्गात् गुणयोगात् बध्यते। तस्मात्प्रकृतेर्बन्धमोक्षौ सत्यौ। अविवेकिनं प्रति प्रवर्तनमेव बन्धः, मोक्षः पुनर्विवेकिनं प्रत्यप्रवर्तनम्। तेन च[3] न स्वभावप्रच्युतिदोष इति ॥

केन रूपेण प्रकृतिरात्मानं बध्नाति केन च विमोचयती[4]त्यत आह[5] ॥

---

१ A पुरुषनिवर्तकाद्ब°। २ A असत्य। ३ C omits च।
४ B omits केन च विमोचयति। ५ B °त्याह।

आञ्जस्यात् तत्त्वतः। समञ्जसत्वात् गुणयोगात् तत्स्थात्[१]। प्रकृतिगतयोरपि बन्धमोक्षयोर्विवेकाग्रहात्पुरु[२]षसंबन्ध इति भावः ॥

प्रकृतिः कियद्भी रूपैरात्मानं बध्नाति । तदाह ॥

रूपैः सप्तभिरात्मानं बध्नाति प्रधानं, कोशकारवत्[३], विमोचयत्येकेन[४] रूपेण[५] ॥ ७३ ॥

रूपैः सप्तभिर्धर्म[६]वैराग्यैश्वर्याधर्माज्ञानावैराग्या[७]नैश्वर्यैर्बध्नाति । विमोचयत्येकेन रूपेण ज्ञानेन ॥

काम्याकाम्यकर्मभ्यां[८] भुक्तिर्मुक्तिश्चेति । तत्त्यागे दृष्टहानिरित्यत आह ॥

सप्तभिर्धर्मवैराग्यैश्वर्याज्ञानाधर्मावैराग्यानैश्वर्यैः । एकेन ज्ञानेन ॥

ननु विवेकख्यात्यर्थं निरन्तरं ध्यानानुष्ठाने मुक्तिहेतुभूतकर्मणां[९] त्यागात् मुक्तिर्न स्यादित्यत आह ॥

निमित्तत्वमविवेकस्येति[१०] न दृष्टहानिः[११] ॥ ७४ ॥

---

१ Corrected; my MSS. तत्थात्। २ a ०त्पुरुषे। ३ A C कोष०। ४ Nâgeśa omits वि०। ५ Vijñâna and Nâgeśa ०त्येकरूपेण। ६ A inserts ज्ञान here। ७ B omits अवैराग्य। ८ A B ०कर्माभ्यां। ९ c ०कर्म। १० B offers the reading of the other commentators by omitting इति। ११ A दृष्टान्तहानिः।

अदृष्टस्य ज्ञानद्वारेण परंपरया कारणत्वं मुक्तौ। संसारस्य तु कारणमविवेकः। तस्मान्न दृष्टहानिरिति॥

विवेकश्च[1] कथं स्यादित्यत्राह[2] ॥

संसारस्य कारणमविवेकः, तन्निवृत्तये विवेकख्यातावेव यतनीयम्। तेन न दृष्टफलमुक्तिहानिर्भविष्यति। कर्म[3]तस्तु चित्तशुद्धिद्वारा मुक्तिः फलमिति तद्दृष्टमि[4]त्युच्यते॥

विवेकः कथं स्यात्। तत्राह॥

तत्त्वाभ्यासान्नेति नेती[5]ति त्यागाद्विवेकसिद्धिः ॥७५॥

स्पष्टम्। श्रुतिश्च 'स एष नेति नेत्यात्माऽगृह्यो, न हि गृह्यते, ऽशीर्यो, न हि शीर्यते' इत्यादि॥

यदि तत्त्वाभ्यासादिना मोक्षः, उपदेशानन्तरं सर्वशिष्याणां मुक्तिः स्यात्, अभ्यासस्य तुल्यत्वादित्यत्राह॥

नेति नेतीति तत्त्वाभ्यासात् देहेन्द्रियादिवैलक्षण्येनात्मनः पुनःपुनश्चिन्तनात्, त्यागात् संन्यासात् च विवेकसिद्धिः विवेकसाक्षात्कारः। तथा च श्रुतिः 'अथात आदेशो नेति नेती'ति 'त्यागेनैके अमृतत्वमानशुरि'ति च॥

---

१ B omits च। २ B ०त्राह। ३ c omits त।। ४ a न दृष्टमि०। ५ ०ती० is omitted in A C।

नन्वभ्यासेन चेद्विवेकसिद्धिद्वारा मोक्षः, तर्हि सर्वेषां शिष्याणां स्यादेकदा, अभ्यासाविशेषात् । अत आह ॥[१]

अधिकारि[२]प्रभेदान्न नियमः ॥ ७६ ॥

उत्तममध्यमाधमशक्तिभेदादेकदेति न नियमः ॥

यदि विवेकान्मुक्तिः, कथं विवेकिनो भोगदर्शनमित्यत्राह ॥

बाधितानुवृत्त्या[३] मध्यविवेकतोऽप्युपभोगः ॥ ७७ ॥

तीव्रविवेकस्योपभोगो नास्ति । मध्यविवेकस्याप्युपभोगो रागाभावादलमिति[४] ज्ञानेन बाधितत्वाद्वासनानुवृत्तिमात्रम् । उपारूढफलं[५] कर्मोपभोगात्क्षिणोमीत्युपभुङ्क्त इति ॥

मध्यविवेकिनः स्वरूपमाह ॥

मध्यत्वं नाम विदेहमुक्तिप्रतिबन्धकप्रारब्धशेषवत्त्वम् । तद्वतो विवे-

१ This Avatârana is given, in all three MSS., as commentary to aphorism 76; in fact, there is either no comment by Mahâdeva on the next Sûtra, or it is lost । २ Mahâdeva अधिकार०, cf. Aph.[3] 277, note 4 । ३ So reads Aniruddha only; the other commentators have बाधितानुवृत्त्या मध्य०, cf. Aph.[3] 278, note 3 । ४ B ०भावादवलति! । ५ B ०फल ।

कात् उपभोगो ऽपीत्यन्वयः। रागद्वेषाभावात् 'बाधितस्य' हर्ष-विषादयोरप्रयोजकस्य कामानुत्पादकस्यापि 'अनुवृत्त्या' प्रारब्ध-कर्मफलत्वेनावश्यकतया। तथा च विवेक्यविवेकिनोरुपभोगे महान्भेद इति भावः ॥

मध्यविवेकिनः स्वरूपमाह ॥

जीवन्मुक्तश्च[1] ॥ ७८ ॥

मुक्त इव मुक्तो रागाभावाद्धर्मानुत्पत्तेश्च[2]। श्रुतिरपि[3]

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥

जीवतो मुक्तिरित्यनुपपत्तेरिदमाह ॥

जीवन्नपि मुक्त इव ॥

जीवन्मुक्ते प्रमाणमाह ॥

उपदेश्योपदेष्टृत्वात्तत्सिद्धिः[4][5] ॥ ७९ ॥

तीव्रविवेकिनो[6] बाह्यासंवेदिन[7] उपदेष्टृत्वमेव नास्ति,

---

१ "The च is omitted by Vedânti Mahâdeva" Aph.[3] 279, note 2। २ च is omitted in B। ३ श्रुतिरपि is omitted in B। ४ a b c उपदेश्यो॰। ५ a ॰पदेश॰। ६ B ॰विपाकिनो। ७ B बाह्य॰।

मन्दविवेकिनो ऽप्यज्ञानान्नोपदेष्टृत्वं, किं तु स उपदेश्यः। उपदेष्टा मध्यविवेकी। अतस्तत्सिद्धिः जीवन्मुक्तसिद्धिः ॥

अत्र प्रमाणं दर्शयति ॥

जीवन्मुक्तस्य रागाद्यभावान्नोपदेश्यत्व[1]संभवः, मन्दविवेकी[2] ह्युपदेश्यः। तथा च तदुपदेष्टृत्वाज्जीवन्मुक्तिसिद्धिः ॥

अत्र प्रमाणं दर्शयति ॥

श्रुतिश्च ॥ ८० ॥

उवाच 'जीवन्नेव हि विद्वान्हर्षायासाभ्यां विमुच्यत' इति ॥

मन्दविवेको ऽप्युपदेष्टा भविष्यतीत्यत्राह ॥

'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि'ति, 'तस्मै स विद्वानुपसन्नाय सम्यगि'ति श्रुतिः विदुष उपदेष्टृत्ववादिन्यप्यस्ति ॥

विपक्षे बाधमाह ॥

इतरथान्धपरंपरा ॥ ८१ ॥

अज्ञानी गुरुः, किं च शिष्यो ऽज्ञातेति[3] ॥

---

१ b °न्नोपदेश्यत्वे, c °न्नोपदेष्टृत्व°। २ c °कि!। ३ B ऽज्ञतेति।

उपदेशे हि ज्ञानान्मोक्षः, उपदेशानन्तरं मुच्येत, किं विलम्बेनेत्यत्राह ॥

अज्ञानिना कथमज्ञान्युपदेश्यः ॥

ज्ञानिनः शरीरं कथं तिष्ठतीत्याह ॥

चक्रभ्रमणवद्धृतशरीरः ॥ ८२ ॥

यथा दण्डापगमे संस्कारवशाच्चक्रं भ्रमति, तथा विवेकिनामपि देहधारणकर्मणो ऽक्षीणत्वान्न तत्क्षणान्मुक्तिः, किं तूपभोगादिना[1] कर्मक्षयादिति । तथा च श्रुतिः

दीक्षयैव नरो मुच्येत्तिष्ठेन्मुक्तो ऽपि विग्रहे ।
कुलालचक्रमध्यस्थो विच्छिन्नो ऽपि भ्रमेद्घटः ॥

तस्मादस्ति जीवन्मुक्त इत्याह ॥

यथा दण्डेन भ्राम्यमाणं चक्रं निवृत्ते ऽपि दण्डे भ्राम्यत्येव, एवं विवेकिनं प्रति प्रकृतेर्निवृत्तावपि[2] पूर्वव्यापारेण जातं शरीरं तिष्ठतीत्यर्थः ॥

ननु दण्डक्रियाया[3] अभावे ऽपि तत्संस्काराद्भ्रमणमस्तु, रागाद्यभावे उपभोगस्तु कथं स्यात् । अत आह ॥

---

१ AC तूपभोगध्यानादिना । २ C ॰र्निमित्तावपि । ३ C ॰क्रिया ।

संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥

[2]जीवन्मुक्तिसिद्धिः ॥

कदा परममुक्तिरित्यत्राह ॥

संस्कारो रागादीनां, स एव लेशो रागाद्याभास इत्यर्थः । तत-स्तत्सिद्धिः उपभोगसिद्धिः । अत एव विवेकिनां रागादिदर्शने ऽपि न तद्रागादि, किं तु रागाद्याभास[3] एवेति भावः ॥

विदेहमुक्तिमाह ॥

विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता, नेतरान्नेतरात् ॥ ८४ ॥

निःशेषेण[4] त्रिविधदुःखस्यात्यन्तनिवृत्तौ कृतकृत्यः, पर[5]मुक्तिप्राप्तेः[6] । नेतरात् कर्मण इति[7] ॥ नेतरादिति वीप्साध्यायपरिसमाप्तौ ॥

उपभोगेन प्रारब्धसमाप्तौ प्रोक्तत्रिविधदुःखस्यात्यन्तनिवृत्तौ कृतकृत्यो मुक्तो भवति । कर्मणो मुक्तिहेतुत्वाभावमुपसंहरति 'इतरस्मात्' कर्मणः । इतरादिति तु संज्ञापूर्वको विधिरनित्य इति वा छान्द-सत्वं वा स्वीकृत्य संगमनीयम् ॥ वीप्साध्यायसमाप्त्यर्था ॥

---

१ A संस्कारलेशतस्त०, a संस्कारालेशतस्त० । २ A C prefix स । ३ ०भा० is effaced in c । ४ A निःशेष । ५ C परं । ६ C ०प्राप्तः । ७ B omits this clause ।

इति [1]कापिलसांख्यप्रवचनसूत्र[2]वृत्तौ वैराग्याध्यायस्तृतीयः[3] ॥ वैराग्यानन्तरं शिष्यप्रबोधाया[4]ख्यायिकार्थं चतुर्थाध्यायारम्भः ॥

इति वेदान्तिमहादेवकृतवृत्तिसारे तृतीयो ऽध्यायः ॥ वैराग्यानन्तरं शिष्यप्रबोधायाख्यायिकाप्रायश्चतुर्थो[5] ऽध्यायः ॥

---



---

१ A श्री before कापिल। २ A °सूत्रे। ३ AC add समाप्तः। ४ B omits °या°। ५ a c °श्चतुर्थो°।

राजपुत्रवत्तत्त्वोपदेशात् ॥ १ ॥

कश्चिद्राजपुत्रो गण्डक्षणजन्मा निःसारितः [2]शबराधिपेन गृहीतः पुत्रत्वेन तदाचारमात्रं जानाति। अथापुत्रस्य राज्ञो मरणे ऽमात्यै[3]रानीय प्रबोधितो 'न त्वं शबरः, राजपुत्रो ऽसी'त्युक्तो[4] झटित्येव पूर्वसंस्कारवशाद्राजपुत्राचारं गृहीतवान्। एवं मन्दानामपि प्रबोधायोपदेशो देय इति ॥

आख्यायिकान्तरमाह ॥

'राजसूनोः स्मृतिप्राप्तौ व्याधि[5]भावो निवर्तते यथैवमात्मनो ऽज्ञस्ये'त्युक्तरीत्या गुरूणां[6] तत्त्वोपदेशादवश्यं कृतकृत्यता भवति। उक्तं च गारुडे

ग्रहाविष्टो द्विजः कश्चिच्छूद्रो ऽहमिति मन्यते।
ग्रहनाशात्पुनः स्वीयं ब्राह्मण्यं मन्यते यथा[7] ॥
मायाविष्टस्तथा जीवो देहो ऽहमिति मन्यते।
मायानाशात्पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ॥

इति ॥

---

१ c राजपुत्रस्तत्त्वो०। २ C सवरा०। ३ A C पात्रैरा०। ४ B ०त्युक्ते। ५ b व्याधि०, c व्याध्या०। ६ c गुरुणा। ७ b तथा।

प्रसङ्गेनाप्यात्मज्ञानान्मुक्तिरित्याह ॥

पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥

कश्चिदाचार्यो 'विजने उपदेशं गृहाणे'ति शिष्यमादायाटवीं प्रविश्योपदेशं दत्तवान्। गुल्मान्तरितेन पिशाचेन श्रुतम्। तस्यापि मुक्तिरभूत्। प्रसङ्गेनाप्यात्मज्ञानान्मुक्तिरिति वाक्यार्थः ॥

अत्र विशेषमाह ॥

केनचिद्गुरुणा विजने शिष्य उपदिश्यमाने[1] ऽन्तर्हितेन केनचित्पिशाचेन तदुपदेशः श्रुतः, मुक्तश्च सो ऽभूदित्याख्यायते। एवमन्यो ऽप्यन्यार्थोपदेशान्मुच्यते ॥

अत्रैव कंचन विशेषमाह ॥

आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

तीव्रवैराग्याणां श्रुतिमात्रान्मोक्षो भवतु। मन्दानां निरन्तरोपदेशादावृत्तिः करणीया ॥

आख्यायिकान्तरमाह ॥

---

१ b उपादिश्यमानो।

तीव्रवैराग्यैः सकृदुपदेशश्रवणादेव मोक्षो लभ्यते मन्दैस्त्वसकृदुपदेशात्, आवृत्तिः बोधावृत्तिरादरणीया[1] ॥

न चोपदेशार्थं[2] गुरुरावश्यक इत्याह ॥

पितापुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

कश्चिद्ब्राह्मणो दारिद्र्याद्गुर्विणीं भार्यां तत्पितृगृहे[3] निक्षिप्य प्रतिग्रहार्थं देशान्तरं गतो बहुना कालेन गृहमागतः पुत्रं दृष्ट्वा न ज्ञातवान्[4], तन्माता भर्तारं पुत्रं च विज्ञापितवती। तत उभयोरपि ज्ञानमभूत्। गुरुं विना सुहृदुपदेशादपि[5] तत्त्वज्ञानं भवतीत्यर्थः ॥

आख्यायिकान्तरमाह ॥

उभयोः गुरुशिष्ययोः दृष्टत्वात् दृष्टार्थत्वात्। नात्र ज्ञाने गुरुनियमः, किं त्वभ्रान्तानामेवोपदेशः कार्यः[6]। अधिकारिणा फलमाप्तव्यमिति ॥ तत्र दृष्टान्तः पितापुत्रवदिति। कश्चिद्दरिद्रो ब्राह्मण आत्मनो भार्यां गुर्विणीं पितृगृहे स्थापयित्वा देशान्तरं गतो बहुना कालेन समागतः। स्वपुत्रं दृष्ट्वापि 'स्वपुत्रो ऽयमि'ति न ज्ञातवान्, पुत्रो ऽपि पितरं दृष्ट्वा 'मत्पितायमि'ति। ततो मात्रा

---

१ c बोध्या०। २ ab चोपदेशात्। ३ B तत्पितुर्गृहे। ४ B ज्ञानवान्। ५ C सुहृद उपदेशादपि। ६ c तु स्वाभ्रान्ता०।

भर्ता पुत्रश्चोपदिष्टः ‘अयं ते पुत्रो, ऽयं ते पिते’ति क्रमेण। ततस्तौ सुखिनावभूतामित्याख्यायिका ॥

सांसारिकसुखं दुःखमिश्रितत्वाद्धेयमित्याह ॥

श्येनवत्सुखदुःखी त्यागवियोगाभ्याम्[1] ॥ ५ ॥

केनापि पुंसा श्येनशावकः प्राप्तः खण्डगुडादिनाहारेण समानेन च पुष्टः। कालेन यौवनमवाप। कथमहमेनं दुःखिनं[2] करोमीति पुंसा वने त्यक्तः। श्येनश्च बन्धत्यागात्सुखी पुरुषवियोगाद्दुःखीति। दुःखशबलत्वात्सुखस्य[3] द्वयमपि हेयमिति[4] ॥

आख्यायिकान्तरमाह ॥

सर्वो ऽपि जनः सुखवान्दुःखवांश्च, दुःखमिश्रितसुखवानित्यर्थः। त्यागवियोगाभ्यां श्येनवत्। केनचिन्मृगयां गत्वा संप्राप्तः श्येनशावकः पोषितश्चान्नपानाभ्याम्। काले यौवनमाप्तवान्। अथैनं बन्धनदुःखिनं कुतो ऽहं करोमीति चिन्तयता तेन श्येनो वने त्यक्तः। स यथा बन्धनत्यागात्सुखी पोषकपुरुषवियोगाच्च दुःखी, तथा सर्वो ऽपि वैषयिकसुखी दुःखवानेवेत्यर्थः ॥

ममत्वस्नेहादिरनर्थावह इत्याह ॥

---

१ AC श्येनवत्सुखदुःखभोगाभ्यां। २ AC सुखिनं। ३ B ०त्वात्सुखस्य। ४ B omits अपि हेयं।

अहिनिर्ल्वयनीवत्[1] ॥ ६ ॥

निर्ल्वयनी[2] निर्मोकः। कश्चिदहिर्विवरद्वारे[3] निर्मोकं त्यक्त्वा ममेदमिति धूलीपङ्काक्तं[4] दृष्ट्वा शोचति, स्नेहाच्च न संत्यक्तवान्। निर्मोकानुसारात्केनाप्याहितुण्डिकेन[5] गृहीतः। ममत्वस्नेहादयो न कर्तव्या इत्यर्थः[6] ॥

आख्यायिकान्तरमाह ॥

अहिनिर्ल्वयनी[7] सर्पनिर्मोकः[8], तस्यामिव। यथा सर्पो निर्मोकं विवरद्वारे त्यक्त्वापि स्नेहात्तत्र ममत्वं न त्यजति, किं तु धूलीपङ्काक्तं दृष्ट्वा शोचति, अथ च तदनुसारादेव केनचिदाहितुण्डिकेन[9] गृहीतो वक्रनर्थभाजनं भवति। तथा विषयेषु स्निह्यञ्जन्तुरित्यर्थः ॥

अकार्यं सर्वथा न कार्यं, प्रमादकृते च तस्मिन्नवश्यं निष्कृतिः[10] कार्येत्याह ॥

छिन्नहस्तवद्वा ॥ ७ ॥

---

१ ABC ०निर्ल्वयनीवत्, ac ०निर्ल्वयिनीवत्, b ०निर्ल्वियिनीवत्, cf. Aph.[3] 289, note 2। २ The MSS. निर्ल्वयनी। ३ B ०द्वारेण। ४ B धूलीपंचकाक्त!। ५ Corrected; A ०प्याहितुण्डुकेन, C ०प्यहितुण्डुकेन, B ०प्यहितुडिकेन। ६ B omits इत्यर्थः। ७ Corrected; the MSS. निर्ल्वयिनीवत्। ८ a ०विमोकः। ९ a ०दाह्हितुण्डीकेन। १० Corrected; the MSS. निःकृतिः।

कश्चिन्मुनिर्भ्रातुराश्रमं प्रविश्य फलादिकमाजहार। भ्रात्राप्युक्तः स्तेयी त्वमिति। तेनोक्तं प्रायश्चित्तं वद। भ्रात्राप्युक्तं हस्तच्छेदादन्यत्प्रायश्चित्तं नास्तीति। तेन च राज्ञे निवेद्य स्वहस्तौ छेदितौ। तस्मादकार्यं न कर्तव्यं, प्रमादकृते च तन्निष्कृतिरवश्यं[1] कर्तव्येति॥

आख्यायिकान्तरमाह॥

एवमाख्यायते

जहार फलपुष्पादि प्रविश्य भ्रातुराश्रमम्।
मुनिः कश्चित्ततो भ्रात्रा स्तेयीत्युक्त उवाच तम्॥
प्रायश्चित्तं वदेत्याह प्रायश्चित्तं करच्छिदाम्।
निवेद्य राज्ञे तेनाशु स्वकरौ छेदिताविति[2]॥

असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥

भरतो नाम नृपः प्रत्यासन्नमोक्षो ऽपि तत्क्षणप्रसूतां हरिणीं दृष्ट्वा हरिणशावकं पुपोष। तं विहाय नान्यमना बभूव। मरणसमये तद्गतमनाः प्राणांस्तत्याज। तत्सङ्गान्मुक्तिं नावाप। अनिष्ट[3]चिन्तनं न[4] कार्यमित्यर्थः॥

---

१ B तन्निःकृति०। २ b च दिताविति in place of छेदिताविति। ३ A अरिष्ट०। ४ B omits न।

बहुभिर्मेलकं[1] न कुर्यादित्याह ॥

भरतः[2] किल हरिणशावकं पुपोष। न तं विहायान्यमना[3] बभूव। स च मरणसमये ऽपि तन्मना एव ममार। तेन मुक्तिं नाप, प्रत्युत जन्मलब्धवानिति पुराणेषु स्पष्टम् ॥

बहुभिर्मेलकं न कुर्यात् ॥

बहुभिर्योगविरोधो[4] रागादिभिः कुमारीशङ्खवत् ॥ ९ ॥

बहुभिः कलहो ऽवश्यं, यथा कुमारीशङ्खानामन्योऽन्यं झणत्कारः[5] परस्पर[6]संघर्षात्[7] ॥

द्वाभ्यामपि न कुर्यादित्याह ॥

यथा कुमारीशङ्खवलयानां परस्परसंघर्षात् रणत्कारः[8], तथा बहूनां[9] मेलने[10] रागादिभिः परस्परं कलहो[11] ऽवश्यं भवेदिति बहु मेलनं न कुर्यात् ॥

द्वाभ्यामपि तथैव ॥ १० ॥

---

१ A ०मेलनं। २ b omits भरतः। ३ c तं विहाय नान्यमना। ४ So reads Aniruddha only; Mahâdeva and the other commentators have ०र्योगे विरोधो। ५ AC कणत्कारः। ६ B omits परस्पर०। ७ B संघोषात्। ८ a सरणत्कारः। ९ b बहवां। १० a b मेलेन। ११ b inserts यो here।

संकथनादिदोषात् ॥

आख्यायिकान्तरमाह ॥

संकथनादिदोषस्य तत्रापि संभवादिति भावः ॥

निराशः सुखी पिङ्गलावत्[1] ॥ ११ ॥

पिङ्गला नाम वेश्या रत्यर्थं भुजंगागमन[2]प्रतीक्षणादुन्निद्रा[3] दुःखमनुभूतवती[4]। एकदा त्वत्यन्तदुःखनिर्विण्णा 'पुनर्नैवं करिष्यामी'ति निर्विण्णा बभूव। निराशा सुखं स्वपिति ॥

गृहारम्भो दुःखायेत्याह ॥

आशा हि परमं दुःखं निराशा परमं सुखम्[5]।
इति संत्यज्य कान्ताशां सुखं सुष्वाप पिङ्गलेति ॥

अनारम्भेऽपि परगृहे सुखी सर्पवत् ॥ १२ ॥

व्यक्तम् ॥

शास्त्रे व्याख्यान[6]परोपालम्भादिकमसार[7]मस्ति, तत्परित्यजनीयमित्याह ॥

---

१ A पिङ्गलादिवत्। २ B C ०गमनं। ३ B प्रतीक्षमाणा उन्निद्रा। ४ C ०नुभुवतीं। ५ The second pâda is missing in b। ६ B व्याख्यातं, C व्याख्यानं। ७ A omits असारं।

गृहारम्भो मनुष्याणां न सुखाय कदाचन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधत इति ॥

बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् ॥ १३ ॥

**यथा भ्रमरः पुष्पं विहाय मधु समादत्ते[१], तद्वन्मोक्षार्थिनाविद्या[२] त्याज्येति ॥**

**कस्य समाधिर्भवतीत्यत्राह ॥**

'सर्वतः सारमादद्यादश्मभ्य[३] इव काञ्चनमि'ति न्यायेन शास्त्रेभ्योऽपि सारमेव ग्राह्यं, न तु परविजयायाभिनिवेष्टव्यम्। किं च, गुरुनिष्ठं प्रमाद्येवादरणीयं न तु कादाचित्कं रागद्वेषादीत्यर्थः। अत एवोक्तं मार्कण्डेये

इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
स तु कल्पसहस्रेषु नैव ज्ञानमवाप्नुयादिति ॥

एकाग्रतादरणीयेत्याह ॥

इषुकारवन्नैकचित्तस्य समाधिहानिः ॥ १४ ॥

**यथेषुकार इषौ गतमनाः[४] समीपे गच्छन्तं राजानं न बुद्धवान्, तथैवैकाग्रमनसो न समाधिहानिरिति ॥**

---

१ A मधुररसमादत्ते। २ B ०द्यार्थिना उपविद्या! ३ b ०दद्यात् दमदश्मभ्य, c ०दद्यात् द्रव्येभ्य। ४ The Visarga is missing in A C।

सत्त्वशुद्ध्यर्थं[1] न व्रतादिभङ्गः कर्तव्य इत्याह ॥

[3]इषुकारो हीषुगतमना राजानं ससैन्यं[4] स्वसमीपमार्गेण गच्छन्तं न[5] जानाति, तद्वदेकचित्तस्य[6] न समाधिहानिः। अन्यस्य तु सावश्यं भवतीति चित्तैकाग्रता तत्त्वज्ञानायादरणीया ॥

[7]कृतनियमलङ्घनादानर्थक्यं लोकवत् ॥ १५ ॥

यथा लोके बहुभिः कृतसमयलङ्घनं सर्वे परित्यजन्ति, तथा व्रतादिलङ्घनाद्वेदार्थबाह्यो भवतीति ॥

तत्त्वज्ञानविस्मरणेन[8] दुःखमवश्यं भवतीत्याह ॥

कृतानां[9] अङ्गीकृतानां नियमानां शौचादीनां लङ्घनात् अननुष्ठानात् आनर्थक्यं नैष्फल्यम्। तत्त्वज्ञानसामग्र्या[10] इति शेषः। शौचाद्यनुष्ठानं[11] तत्त्वज्ञानसाधनेन तत्त्वज्ञाने जननीये सहकारीति भावः। 'लोकवत्' लोके यथा कृतानां नियमानां समयानां लङ्घने राज्यादि

---

१ C सर्वं°। २ C °र्थे। ३ The commentary as far as समाधिहानिः is missing in a। ४ b राज्ञः सैन्यं। ५ b गच्छन्न। ६ b तद्वदेकाग्रचित्तस्य। ७ AC कृत°, the reading of Mahâdeva and of the other commentators; cf. Aph.[3] 296, note 2; my MSS. of Mahâdeva offer the wrong reading वृत° or वृत्त°। ८ AC °विस्मरणे। ९ Corrected; the MSS. वृतानां। १० bc °सामग्र्य्। ११ a °द्यनुष्ठानादानं।

सुखकारणमपि[1] निष्फलं[2] भवति, समयलङ्घने प्रजोद्वेगेन राज्यमपि सुखदं न भवति तद्वत् ॥

तत्त्वज्ञानविस्मरणे[4] दुःखं भवतीत्याह ॥

सतिमत्ये ग्रपि भेकीवत् ॥ १६ ॥

**कश्चिन्नृपो मृगयां गतो वने सुन्दरीं कन्यामपश्यत् । तामपृच्छत्का त्वमिति । सा प्राह राजदुहिताहम् । राजा प्राह मां भजस्व । सा प्राह बाढं, किं तु समयं कुरु, त्वया जलं मम न दर्शनीयमिति । एवमस्त्वित्युक्त्वा तस्याः पाणिं जग्राह । एवं गते काले क्रीडयायासिता कुत्र जलमिति राजानं पप्रच्छ । राजापि संभ्रमात्समयं विस्मृत्य जलमदर्शयत् । सा च भेकराजदुहिता जलस्पर्शाङ्गिकी बभूव । राजापि जालादिना तामन्विष्याप्राप्य बहु दुःखमनुबभूव । तस्मात्तत्त्वाभ्यासविच्छेदो न कार्य इति ॥**

**आख्यायिकान्तरमाह ॥**

तदिति बुद्धिस्थलात्तत्त्वज्ञानं परामृश्यते ॥ यथा कश्चिद्राजा मृगयां

---

१ ab ०करणम० । २ b omits अपि । ३ the MSS. निःफलं । ४ c ०विस्मरणो ! ।

गतः सुन्दरीं कन्यामद्राक्षीत्, तां[१] दृष्ट्वा च तस्यां साभिलाषो भूत्वा पप्रच्छ कासि त्वमिति। सा च राजदुहिताहमित्याह। राजा मां भजस्वेत्याह। तया च जलं मे न दर्शयितव्यमिति समयपूर्वकं राजा पतित्वेनाङ्गीकृतः। एवं गते काले क्रीडयायासिता सती कदाचिद्राजानमाह कुत्र जलमिति। राजा तु समयविस्मरणाज्जलं प्रदर्शयामास। सा च जलस्पर्शाङ्किकी भूत्वा जलं प्रविष्टा। राजा तु तद्विरहाद्दुःखमवापेत्याख्यायते॥

नोपदेशश्रवणमात्रेण कृतकृत्यता, अपि तु गुरुनिकटे स्थित्वा मननादि कुर्वत एवेत्याह॥

नोपदेशश्रवणे[२]ऽपि कृतकृत्यता[३] परामर्शादृते विरोचनवत्॥ १७॥

**न श्रवणमात्रान्मुक्तिः, किं तु मननादेव[४]। यथेन्द्र[५]विरोचनौ तत्त्वज्ञानाय ब्रह्मलोकं[६] गतौ ब्रह्मणा चोपदिष्टौ। विरोचनस्तत्त्वज्ञानश्रवणा[७]त्स्वगृहमागतो न मननादि[८] कृतवान्। अतो नामुच्यत। इन्द्रस्तु ब्रह्माणमाराधयन्बहुकालं मननमकरोत्॥**

---

१ c omits तां। २ Mahâdeva नोपदेशे। ३ So reads Aniruddha only, Mahâdeva and the others कृतकृत्यता। ४ B मननादेः। ५ A पुष्पेन्द्र०।। ६ A B ०लोक०। ७ A ०श्रावणात्। ८ A मननं।

इन्द्रस्य किं वृत्तमित्यत्राह ॥

परामर्शो मननादिः। विरोचनो ह्युपदेशं श्रुत्वैव गृहं गतो न मननादि कृतवान्। अतो नामुच्यत ॥

[illegible] ॥ १८ ॥

तयोर्मध्ये इन्द्रस्य बोधो दृष्टः। बहुकालाभ्यासेन[1] ब्रह्म-प्रसादनान्मनन[2]निदिध्यासन[3]साक्षात्कारात्सिद्धि[4]रिति ॥

ज्ञानप्राप्तिश्च कथमित्यत्राह ॥ ...समय

तयोः इन्द्रविरोचनयोर्मध्ये इन्द्रस्य दृष्टः कृतकृत... ...स्त्वित्युक्ता

कथमिन्द्रस्य कृतकृत्यभावः। तत्राह ॥ ...डयायासिता

संभ्रमात्स-

[illegible] ...राजदुहिता

[illegible] ॥ १९ ॥ ...। ताम-

...ाभ्यास-

अप्रणतस्या[6]ब्रह्मचारिणोऽनधिकारः। तद्वत् ...

यथा ब्रह्माराधनेनेन्द्रेण ज्ञानं प्राप्तं, तथा गुवा...

नान्येनापि ॥

...यां

---

१ B ०कालाराधनेन। २ AC omit मनन। ३ C ०न... ४ C ०त्कारसिद्धि०। ५ The three MSS. of Anirud... have ०पसर्पणान्कृत्वा। ६ A अप्रयतस्या०।

यदध्यस्तं रूपं, तत्सदृशो[1]पासनात्पारंपर्येण तद्रूपं प्रकाशते। दृष्टं च समानवस्तुचिन्तायां समानानुस्मरणम्। तथा च[2]

सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः।
अतो नातिप्रसङ्गो ऽस्ति स्वप्नादौ भावनाबलात्[3]॥

ब्रह्मादिलोकला[4]भात्कृतत्यस्य किमात्मज्ञानेनेत्यत्राह॥

यज्ञानुष्ठायिनां अदृष्टधर्मलाभवत् पारंपर्येण गुरुपरंपरया अध्यस्तस्य उपदिष्टस्य रूपस्य स्वरूपस्य उपासनात् आत्मतत्त्वदर्शनमिति शेषः। ध्याने दर्शनं नापेक्ष्यते, ऽपि तु ज्ञानं, तच्च गुरुपरंपरया सुलभमेवेति भावः॥

ननु मुक्तिजनकतत्त्वज्ञानेनालं, ब्रह्मलोकलाभेनापि कृतकृत्यत्वात्। तत्राह॥

इतरलाभे ऽप्यावृत्तिः[5] पञ्चाग्नियोगतो जन्मश्रुतेः॥ २२॥

अग्निहोत्रादिना ब्रह्मलोकप्राप्तिः, कर्मजश्च क्षीयत इति पुनरावृत्तौ जन्मश्रुतिः 'यथेह कर्मजितो लोकः

---

१ B तत्स्वरूपो॰। २ B omits च। ३ AC ॰बले। ४ B ॰भावात् instead of ॰लाभात्। ५ A a व्यावृत्तिः; cf. Aph.[3] 302, note 3।

क्षीयते, एवमेवामुत्र पुण्यजितो[1] लोकः क्षीयत' इति,

'न कर्मणा न प्रजया धनेन, त्यागेनैके अमृतत्व[2]मानशुरि'ति ॥

विरक्तस्य किं स्वरूपमित्यत्राह ॥

पञ्चाग्नियोगतः पञ्चाग्न्युपासनात् । इतरलाभे ऽपि ब्रह्मलोकलाभे ऽपि आवृत्तिः । कुतः । जन्मश्रुतेः, 'इमं मानवमावर्तं नावर्तन्त[3]' इति श्रुतौ 'इममि'ति विशेषणान्मानवान्तरे जन्मप्रतीतेः ॥

तच्च तत्त्वज्ञानं विरक्तस्यैवेत्याह ॥

विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् ॥२२॥

यद्यपि सर्वेषां हेयहानमुपादेयोपादानं, तथापि प्रकरणविशेषाद्धेयः संसारः, उपादेयो मोक्ष इति द्रष्टव्यम् ॥

अत्र युक्तिमाह ॥

हेयः संसारः, उपादेयो मोक्षः ॥

कुत इत्यत आह ॥

लब्धातिशययोगात्[4] तद्वत् ॥ २३ ॥

---

१ Corrected according to Chhând. Up. 8. 1. 6; my MSS. पुण्यकृतो । २ A C नामृतत्व॰ । ३ b ॰मावर्तमावर्तन्त । ४ B ॰योगाद्वा, the reading of Mahâdeva and Vijñâna; Aph.[3] 304, note 3, states only the fact that Nâgeśa omits वा ।

हंसवत् [1]हंसस्यैवातिशयशक्तिर्येन मिश्रितमपि क्षीरं पिबति जलं त्यजति। तथा लब्धातिशयस्य[2] पुंसः संसारो हेय उपादेयो मोक्ष इति ॥

सरागस्यापि मुक्तिर्भविष्यतीत्यत्राह[3] ॥

तद्वत् हंसवत्। हंसस्यैव क्षीरनीरविवेचनशक्तिवत् विरक्तस्यैव हेयोपादेयविवेचनातिशययुक्तिलाभादिति भावः। वाशब्द एवार्थे। विरक्तस्यैवेत्यादिः ॥

न कामचारित्वं रागोपहते शुकवत्[4] ॥ २५ ॥

रागोपहतस्य कामचारित्वमेव नास्ति, किं पुनर्मुक्तिरिति। यथा व्यासस्य सरागस्य न मुक्तिरिति। तत्सुतस्य शुकस्य वीतरागत्वान्मुक्तिर्भूतैवम् ॥

बन्धः कथमित्यत्राह ॥

रागोपहते कामचारित्वमपि न, किं[5] पुनर्मुक्तिरिति शेषः। वीतरागे तु मुक्तिः शुकदेव इव ॥

बन्धः कथमित्यत्राह ॥

---

१ B हंसस्येवा०। २ C लब्धातिशययोगात्तस्य। ३ B ०तीत्याह।
४ Thus A C like the other commentators; B puts शुकवत् before कामचारित्वं, cf. Aph.[3] 304, note 7; b has कामविचारित्वं, c कामिचारित्वं। ५ c omits किं।

गुणयोगाद्बद्धः[1] शुकवत् ॥ २८ ॥

यथा शुकः पक्षी गुणयोगाद्बन्धमाप्नोति, तथा गुणयोगात्पुमानपि बन्धमाप्नोति ॥

भोगादेव वैराग्यं कालवशाद्भविष्यति, किं ज्ञानेनेत्यत्राह[2] ॥

गुणशब्दः श्लिष्टः। यथा मधुरभाषणादिगुणयोगात् शुकः पक्षी बध्यते, एवं सत्त्वरजस्तमआत्मकगुणयोगात् आत्मा बध्यत इति भावः ॥

वैराग्यं च न भोगात्, अपि तु दोषदर्शनादित्याह सूत्राभ्याम् ॥

न भोगाद्रागशान्तिर्मुनिवत् ॥ २९ ॥

न मुनेरपि भोगाद्रागशान्तिः, किं पुनरन्यस्य। यथा कण्व[3]सौभरिप्रभृतयः ॥

विषयिणां कथं वैराग्यं भविष्यतीत्यत्राह ॥

दोषदर्शनादुभयोः ॥ ३० ॥

---

१ B ॰द्धद्धः; F. E. Hall says, Aph.[3] 305, note 3: "All the commentators but Vijñâna read बन्धः, instead of बद्धः," but my three MSS. of Mahâdeva have बद्धः। २ C ब्यावनताह instead of ज्ञानेनेत्यत्राह। ३ B काश्यप॰।

उभयोः आत्मनो विषयस्य च[१]। आत्मनो दोषः सङ्गान्नरकपातो गर्भवासादिश्च[२]। विषयदोषः परिणतिविरसत्वादिः ॥

[३]उपदेशानधिकारिणं पुरुषमाह ॥

सौभरिप्रभृतीनामपि मुनीनां भोगाद्रागशान्तिर्नाभूत्। अस्मत्सदृशां[४] तु का वार्ता ॥ उभयोः आत्मनो विषयस्य च। सङ्गान्नरकपातगर्भवासाद्य आत्मनो दोषाः, परिणतिविरसत्वादयस्तु विषयस्य ॥

न मलिन[५]चेतस्युपदेशबीजप्ररोहो ऽजवत् ॥ २९ ॥

यथासंस्कृते क्षेत्रे न बीजप्ररोहः, तथा रागादिमलिन[६]चेतसि नोपदेशबीजप्ररोहः। 'अजवदि'ति अजनाम्नि नृपे भार्याशोकार्ते[७] यथा वसिष्ठेनोपदेशो दत्तो[८] न स्थिरीबभूव ॥

[३]रागादिमलिने चेतसि नाभासज्ञानमपीत्याह ॥

उपदेशरूपस्य बीजस्य कारणस्य प्ररोहः फलोन्मुखत्वम्। 'अजवत्' अजनाम्नि नृपे भार्याशोकार्ते वसिष्ठोपदेशो न कार्यक्षम आसीत् ॥

अतिमलिनचेतसि ज्ञानाभासो ऽपि नेत्याह ॥

---

१ A B omit च। २ B गर्भवासादयश्च। ३ A C उपदेशे ऽनधि°। ४ C अस्मादृशां। ५ One of F. E. Hall's MSS. has मलिने, Aph.[3] 307, note 3। ६ B °मलिने। ७ A °शोकांते। ८ A °पदेशो दत्ते।

नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥

यथा मलिने दर्पणे मुखाभासमपि न प्रतिभाति, तथा प्रधानप्रतिबिम्बितत्वादात्मनः[1] प्रधानकार्यमात्मज्ञानम्[2] ॥

ननु महानेव कारणरूपत्वादात्मास्त्वित्यत्राह ॥

प्रकृतिजन्यस्य भूत[4]भौतिककर्तृत्वादेरिव तज्जन्यस्य[5] मोक्षस्यापि संसारत्वं स्यात् । तत्राह ॥

न तज्जस्यापि[6] तद्रूपता पङ्कजादिवत्[7] ॥ ३१ ॥

न कार्यमेव कारणं[8] भेदात् । नहि पङ्कज एव पङ्कः[9] ॥

अणिमादिविभूतिसिद्धस्यापि न[10] कृतकृत्यतेत्याह[11] ॥

यथा पङ्काज्जातस्यापि न पङ्करूपता, तथा प्रकृतिजन्यस्यापि न संसाररूपत्वं, दुःखास्पर्शेन विशेषात् ॥

ननु दुःखास्पर्शोऽणिमादिसिद्धिलाभेऽस्तीत्यत्राह ॥

---

१ C ॰दात्मनि । २ आत्मनः प्रधानकार्यं is missing in A । ३ B adds इव । ४ a भूति॰ । ५ a b तज्जन्य॰ । ६ Mahâdeva has तज्जन्यस्यापि । ७ So reads Aniruddha only; the others पङ्कजवत्, cf. Aph.[3] 309, notes 2 and 3 । ८ A कारण । ९ A पङ्कजः, C पङ्कजं । १० A omits न । ११ A ॰तेत्यत्राह ।

न भूतियोगे[1] कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ॥ ३२ ॥

**यथा गुरूपासनया तत्त्वज्ञानेन सिद्धस्यानावृत्तेः कृतकृत्यता, तथा न[2] भूतियोगेन, पुनरावृत्तेः ॥ उपास्यसिद्धिवदिति वीप्साध्यायपरिसमाप्तौ ॥**

आवृत्तिसत्त्वादिति भावः। उपास्येन राजादिना या सिद्धिर्विशिष्टाधिकारलाभादिस्तस्यामिव[4]। सा हि क्षयिष्णुत्वान्न कृतकृत्यतावहेति ॥ वीप्साध्यायसमाप्तिं द्योतयति[5] ॥

---

**इति कापिल[6]सांख्यप्रवचनसूत्रवृत्तावाख्यायिकाध्यायश्चतुर्थः ॥ आख्यायिकानन्तरं परपक्षनिरासार्थं[7] पञ्चमाध्यायारम्भः[8] ॥**

इति महादेवकृते सांख्यवृत्तिसारे चतुर्थोऽध्यायः ॥ परपक्षजयार्थं पञ्चमाध्याय आरभ्यते ॥

---

१ The remark Aph.[3] 310, note 2, is not confirmed by my MSS. with regard to Mahâdeva; all three read सूति॰। २ A C add ऽपि, to make up the reading of the other commentators; cf. Aph.[3] 310, note 3। ३ A C transpose तथा न। ४ b ॰लाभादितस्त॰। ५ a b द्योतति। ६ B इति श्रीकपिल॰। ७ B ॰विजयार्थं। ८ A B ॰ध्यायप्रारम्भः।

तत्र ग्रन्थारम्भे मङ्गलं न कार्यं, निष्प्रयोजनत्वात्, तच्च कृते ऽपि मङ्गले ग्रन्थस्यासमाप्तेरकृते ऽपि समाप्तेश्चेति । तद्दूषयति ॥

मङ्गलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्चेति[1] ॥१॥

**कृते ऽपि मङ्गले ग्रन्थापरिसमाप्तेरकृते ऽपि समाप्तेः, किं मङ्गलेनेति यैरुक्तं, तदनेन निरस्तम् ॥**

**पूर्वसिद्धमीश्वरासत्त्वम् । इदानीं न्यायमाह ॥**

श्रुतित इति शिष्टाचारानुमित[2]श्रुतित इत्यर्थः । [3]असमाप्तिरङ्गवैकल्यात्, समाप्तिर्जन्मान्तरीयमङ्गलादिति समाधानसंभवात् । पराक्रान्तं चात्र सूरिभिः ॥

ईश्वरेणाधिष्ठिते कारणे कार्योत्पत्तिः, कुलालाद्यधिष्ठिते मृदादौ घटाद्युत्पत्तिदर्शनादिति दूषयति ॥

नेश्वराधिष्ठिते[4] फलसंपत्तिः[5], कर्मणा तत्सिद्धेः ॥२॥

---

१ A C read like Mahâdeva and the other commentators: ०दर्शनाच्छ्रुतितश्चेति । २ C ०चारात् मित० । ३ C समाप्ति० ! । ४ Corrected according to the other commentators; A ०धिष्ठितैव, B ०धिष्ठित, C ०धिष्ठितः । ५ So read Aniruddha and Mahâdeva, the two other commentators have ०निष्पत्तिः; my MSS. A C ०संपत्; cf. Aph.[3] 313, note 4. The reading सदाफलसंपत्तिः, attributed to Mahâdeva by F. E. Hall, is not found in any of my MSS ।

यदीश्वरः स्वतन्त्रः कर्ता, कर्मणा विनापि कुर्यात्। अथ कर्मसहकारी कुरुते। कर्मैवास्तु, किमीश्वरेण। न च सहकारी प्रधाने[1]शक्तिं बाधते। स्वातन्त्र्यविघातात्। किं च स्वार्थपरार्थाभ्यां प्रवृत्तिर्दृष्टा। न चेश्वरस्य स्वार्थमस्ति। परार्थत्वे[2] कारुणिकस्य दुःखमयसृष्ट्यनुपपत्तिः। न च[3] परार्थ[4]प्रवृत्तिः, परोपकारादिनापि[5] स्वार्थलाभात्प्रवृत्तेः। तस्मात्कर्मैव जगत्कारणमस्तु॥

एतद्दर्शयति॥

ईश्वरः किं कर्मापेक्ष्य सृजति, अनपेक्ष्य वा। आद्ये कर्मैव कारणमस्तु, नेश्वरः। अन्त्ये स्वातन्त्र्यविघातः। किं चेश्वरस्य स्वार्था परार्था वा प्रवृत्तिः। नाद्यः, तस्याप्तकामत्वस्वीकारात्। नान्त्यः, कारुणिकस्य दुःखसृष्टिप्रवृत्त्यनुपपत्तेः॥

किं च, यः कारणमधितिष्ठति स स्वोपकारायैव, एवमीश्वरस्यापि स्यादित्याह॥

स्वोपकारादधिष्ठानं लोकवत्॥ ३॥

न च नित्यस्य स्वोपकारः समस्ति॥

स्वोपकार एव[6] भविष्यतीत्यत्राह[7]॥

१ B प्रधाने। २ B परार्थे। ३ A C वा। ४ A परार्थं। ५ A C omit अपि। ६ B स्वोपकारार्थं। ७ B ०तीत्याह।

स्वोपकारादिति फले हेतौ पञ्चमी ॥

अथास्त्वीश्वरे ऽपि स्वोपकारः । तत्राह ॥

लौकिकेश्वरवदितरथा ॥ ४ ॥

असर्वज्ञ इत्यर्थः ॥

दूषणान्तरमाह ॥

इतरथा स्वोपकारस्वीकारे । लौकिकेश्वरवत् अनाप्तकामत्वापत्तिरिति शेषः ॥

लौकिकेश्वरवैलक्षण्ये पारिभाषिक एवेश्वरः स्यादित्याह ॥

पारिभाषिको वा ॥ ५ ॥

प्रकृतिच्छायापत्त्या तत्कर्तृत्वादात्मैव कर्तेति तस्येश्वर[1]-संज्ञेति परिभाषेति ॥

हेत्वन्तरमाह ॥

वा एवार्थे ॥

कथं पारिभाषिकः । तत्राह ॥

न रागादृते तत्सिद्धिः[2] प्रतिनियतकारणत्वात् ॥ ६ ॥

---

१ C तस्यैवेश्वर० । २ Mahâdeva reads जगत्सिद्धिः ; cf. Aph.[3] 316, note 3 ।

अविनाभावस्य कारणस्य[१] व्यभिचारे सर्वत्रानाश्वासः[२]। रागश्च प्रवृत्तिनिमित्तमिति तं विना कथं जगन्निर्मातृत्वं[३], न च मुक्तस्य रागो ऽस्ति ॥

राग एव भविष्यतीत्यत्राह ॥

न रागादृते जगन्निर्मातृत्वादिसिद्धिः, निर्माणरागयोः कार्यकारणभावादित्यर्थः ॥

रागाङ्गीकारे दूषणमाह ॥

तद्योगे ऽपि न नित्यमुक्तः ॥ ७ ॥

रागयोगे ऽपि ॥

प्रधानशक्तियोगात्कर्तृत्वं भविष्यतीत्यत्राह ॥

अपिस्त्वर्थे। स्यादिति शेषः ॥

प्रधानशक्तियोगाच्चेत्सङ्गापत्तिः ॥ ८ ॥

'असङ्गो ह्ययं पुरुष' इति तद्विरोधापत्तिः ॥

न प्रधानसङ्गः, किं तु प्रधानसत्तामात्रेण कर्तृत्वं भविष्यतीत्यत्राह ॥

---

१ B करणस्य। २ B सर्वत्र नाश्वासः। ३ A ०र्मातृकं।

प्रधाननिष्ठा या कर्तृशक्तिः तद्योगाच्चेत्कर्तृत्वं[1], तर्हि प्रधानेन साकं सङ्गः स्यात् । तत्र 'असङ्गो ह्ययं पुरुष' इति श्रुतिविरोधः ॥

प्रधानसत्तामात्रेण कर्तृत्वे त्वाह ॥

सत्तामात्राच्चेत्सर्वैश्वर्यम् ॥ ९ ॥

सर्वात्मनः प्रति प्रधानसत्ताया अविशेषात्सर्वात्मनामीश्वरत्वम् ॥

ईश्वरसाधनानि[2] सन्ति । तत्कथमित्यत्राह ॥

प्रधानसत्तायाः सर्वानात्मनः प्रत्यविशेषात्सर्वेषामात्मनामैश्वर्यं स्यात् ॥

प्रत्यक्षाभावान्न तत्सिद्धिः ॥ १० ॥

प्रत्यक्षप्रमाणाभावात् ॥

अनुमानं भविष्यतीत्यत्राह[3] ॥

तत्सिद्धिः ईश्वरसिद्धिः । प्रत्यक्षप्रमाणाभावस्य प्रसिद्धत्वात् ॥

अनुमानं निराकरोति ॥

संबन्धाभावान्नानुमानम् ॥ ११ ॥

प्रत्यक्षपूर्वकत्वाद्व्याप्तेस्तदभावात्कुतः संबन्धग्रहः[4] । न चासाधारणस्य संबन्धग्रहः ॥

---

१ b सा योगा० । २ B adds प्रमाणानि । ३ B ०तीत्याह ।
४ B संग्रहः instead of संबन्धग्रहः ।

शाब्दं प्रमाणं भविष्यतीत्यत्राह ॥

संबन्धाभावात् व्याप्त्यभावात् ॥

श्रुतिर्जगतो नेश्वरकार्यत्वस्य [1]बोधिकास्ति, प्रत्युत प्रधानकार्यत्वस्यैव बोधिका 'अजामेकामि'त्यादिरस्तीत्याह ॥

श्रुतिरपि प्रधानकार्यत्वस्य[2] ॥ १२ ॥

'प्रधानाज्जगदुत्पद्यत' इति श्रुतिरस्ति । तस्मादीश्वरसाधकप्रमाणान्याभासानि[3] ॥

अविद्यायोगादात्मनः कर्तृत्वमिति केचित् । तत्राह ॥

बोधिकेति[4] शेषः ॥

अविद्याशक्तियोगात्कर्तृत्वमिति केचित् । तद्दूषयति ॥

नाविद्याशक्तियोगो निःसङ्गस्य ॥ १३ ॥

व्यक्तम् ॥

दूषणान्तरमाह ॥

स्पष्टम् ॥

किं च ॥

---

१ C बोधकाo । २ So reads Aniruddha only, Mahâdeva and the others प्रधानकार्यत्वस्य । ३ B C oप्रमाणाभासानि । ४ C बोधकेति ः

तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥ १४ ॥

अविद्यया विना न सृष्टिः, सृष्ट्या विना नाविद्येत्यन्योऽन्याश्रयत्वम् ॥

अनादित्वाद्बीजाङ्कुरवन्नान्योऽन्याश्रयत्वमित्याह ॥

अविद्यायोगसिद्धौ सत्यां तद्योगे कर्तृत्वयोगे ऽन्योऽन्याश्रयत्वं, कर्तृत्वसिद्धावविद्यायोगादित्यर्थः ॥

न च कर्तृत्वाविद्ययोरनादित्वमित्याह ॥

न बीजाङ्कुरवत्सादिसंसारश्रुतेः ॥ १५ ॥

भवेदेवं, यद्यनादिः संसारः । किं तु सादिः संसारः । श्रुतिश्च

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रै-
र्द्यावाभूमी जनयन्देव एकः ॥

तस्मात्प्रलये[1] प्रवाहविच्छेद इति ॥

अविद्यास्वरूपमाह ॥

---

१ A. प्रलय ।

‘सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि’त्यादिश्रुत्या प्रलये संसारस्याभावावगमात्संसारस्य सादित्वम् ॥

अविद्याया ब्रह्मभिन्नत्वे दूषणमाह ॥

विद्यातो ऽन्यत्वे ब्रह्मबाधप्रसक्तेः[1] ॥ १६ ॥

विद्यातो ऽन्यत्वे ब्रह्मणो ऽपि विद्यातो ऽन्यत्वे ऽविद्यात्वं स्यात्। ततश्च ब्रह्मत्वबाध इति ॥

युक्त्यन्तरमाह[2] ॥

विद्यातो ज्ञानस्वरूपाद्ब्रह्मणः। अविद्याया अन्यत्वे ब्रह्मबाधस्य[3] प्रसङ्गः, [4]त्रिविधपरिच्छेदशून्यत्वस्य ब्रह्मणि त्वयाङ्गीकारात्। अविद्याया ब्रह्मभिन्नत्वे ब्रह्मणो ऽप्यविद्याभिन्नत्वे[5] च भेदप्रतियोगित्वानुयोगित्वरूपवस्तुपरिच्छेदापत्तिरिति भावः ॥

किं च, विद्ययाऽविद्याया अबाधो बाधो वा। आद्ये आह ॥

अबाधे नैष्फल्यम्[6] ॥ १७ ॥

---

१ So read Aniruddha and Nâgeśa; Mahâdeva and Vijñâna have ०प्रसङ्गः; cf. Aph.³ 324, note 3। २ A अयुक्त्यन्तरमाह !, C अत्युत्तरमाह। ३ b adds वा। ४ b विविध०। ५ c ०भिन्नत्वं। ६ A B C नैःफल्यं, a नैष्कल्यं।

यदि विद्ययाविद्या[1] न बाध्यते, विद्यैव न भवि-ष्यतीति ॥

बाध्यत एवेत्यत्राह ॥

विद्याया [2]नैष्फल्यापत्तिरित्यर्थः ॥

अन्ये आहु ॥

विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

जगतोऽप्यविद्यात्वम् ॥

अस्ति[3] जगतोऽप्यविद्यात्वमित्यत्राह ॥

अविद्याया इव जगतोऽपि बाधः स्यात्। तथा च जगन्न प्रतीये-तेति[4] भावः ॥

तद्रूपत्वे सादित्वम् ॥ १९ ॥

अनादिरियमविद्या। जगतस्तद्रूपत्वेऽविद्यायाः सादि-त्वम् ॥

न कर्मणो जगत्कारणत्वं, स्वभावादेव जगदुत्पद्यत[5] इत्यत्राह ॥

---

१ A यद्यविद्ययादिविद्या। २ a नैष्कल्या०। ३ A C अस्तु। ४ b प्रतीयेति। ५ A C ०दुत्पत्स्यत।

पुनस्तद्रूपत्वे[1] जगदभिनवं जायत इत्यभ्युपगमे ऽविद्याया अप्यभिनवाया उत्पत्तिर्वाच्या। तथा चाविद्यायाः सादित्वं स्यात्। एवं चानिर्मोक्षापत्तिरिति भावः ॥

इदानीं धर्मस्य सृष्टिकारणतामाह ॥

न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् ॥ २० ॥

**[2]प्रकृतेर्नित्यत्वात्स्वभावस्यैकत्वाद्धर्माभावाद्वि[3]चित्रकार्यानुत्पत्तिः। तस्माद्धर्मभेदेन कार्यवैचित्र्यम्। न धर्मापलापः ॥**

**धर्मसिद्धौ प्रमाणमाह ॥**

कार्यवैचित्र्यं प्रकृतिमात्रेण न संभवति, तस्या एकस्वभावत्वात्, अपि तु धर्मवैचित्र्येण। धर्मशब्देन चात्रादृष्टमुच्यते ॥

न च धर्मे मानाभाव इत्याह ॥

श्रुतिलिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥

**'श्रुती'ति शाब्दं प्रमाणं दर्शितं, 'लिङ्गे'त्यनु[4]मानम्। आदिशब्दाद्योगिप्रत्यक्षं दर्शितम्[5]। एभिर्धर्मसिद्धिः ॥**

---

१ C ०पत्वं। २ A प्रकृतेर्नित्यत्वात्स्वभावस्यै०, B प्रकृतेर्नित्यस्यात्मभावस्यै०। ३ B ०दि० instead of ०वि०। ४ A C लिङ्गमित्यनु०। ५ दर्शितम् is omitted in B।

यदि देशकालयोर्न कारणत्वं, कथं काश्मीरे[1] कुङ्कुमं[2], वसन्ते चूतमुकुलोत्पत्तिरित्याह ॥

लिङ्गं अनुमानम् । आदिपदाद्योगि[3]प्रत्यक्षम् ॥

देशकालादीनां कारणत्वमाह ॥

न नियमः, प्रमाणान्तरावकाशात् ॥ २२ ॥

नादृष्टमेव कारणमिति नियमः । किं त्वदृष्टं सहकारिकारणं, अन्येषामपि कारणत्वं[4], प्रमाणसद्भावात् ॥

दुःखमयसंसारदर्शनाद्दुरितादृष्टमेवास्त्वित्यत्राह ॥

नादृष्टमेव कारणमिति नियमः । अपि तु प्रमाणान्तरैस्तत्कारणत्वग्राहकैरन्येषामपि[5] कारणत्वावकाशादन्यान्यपि ॥

उभयत्राप्येवम् ॥ २३ ॥

सुखस्यापि दर्शनाच्छुभादृष्टमेवास्तु ॥

दुःखाभावे सुखाभिमानात्तत्राऽदृष्टशब्दो[6] मुख्यः, सुखकारणे गौण इत्यत्राह ॥

---

१ B काश्मीरं, C कश्मीरे । २ A C कुङ्कुमो । ३ c ०गी० । ४ C कारणत्व, A कारणमेवं । ५ b ०त्वा० instead of ०त्व० । ६ B ०भिमानान्नात्र दृष्ट० ।

इहलोके परलोके च। एवं अदृष्टजन्यं सुखं दुःखं[1], मिश्रितं सुखमिति यावत् ॥

अर्थात्सिद्धिश्चेत्समानमुभयोः ॥ २४ ॥

एतद्विपरीतसंभवादुभयोस्तुल्यत्वमिति ॥

धर्मादीनामात्मधर्मत्वं निषेधति ॥

अर्थात् लोकोत्तराद्विषयात् दिव्याङ्गनादिरूपात् सिद्धिः उत्पत्तिः सुखस्य (परलोक इति शेषः), तथा च[2] दुःखमिश्रितत्वं सुखस्येति चेत्, उभयोः इहलोकपरलोकयोः समानमेतत्। इहलोकेऽपि हि सुखकारणभूताः सन्त्येव विषयाः, किं तु सुखं प्रति धर्मः कारणम्। स च हिंसादिमिश्रितत्वान्न सुखं दुःखामिश्रितं जनयितुमीष्टे, अपि तु दुःखमिश्रितमेवेति भावः ॥

आत्मधर्मत्वं धर्मादीनां दूषयति ॥

अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥

बुद्धिधर्मत्वम्। आत्मधर्मत्वे[3] निःसङ्गत्वश्रुतिविरोधः ॥

अन्यधर्मस्यान्यत्र[4] कार्यादर्शनादिरमसत्त्वमेव धर्मादीनामित्यत्राह ॥

---

१ b c दुःख। २ b inserts त, c न। ३ B ०धर्मत्व। ४ A ०स्यान्य०। ५ B कार्यद०।

'असङ्गो ह्ययं पुरुष' इति श्रुतेरिति भावः ॥

गुणः किं गुणवति वर्तते गुणरहिते वा । आद्ये आत्माश्रयः, अन्त्ये गुणादिष्वपि गुणप्रसङ्गः । तस्माद्बाधित एव गुणः । एवं कर्माद्यपीति केचिद्वादिनः । तद्दूषयति ॥

गुणादीनां[1] नात्यन्तबाधः ॥ २६ ॥

यथा पृथिव्यादीनां दृष्टत्वान्नात्यन्तबाधः, तथा गुणादीनां धर्मादीनामपि । अन्यधर्मस्याप्यन्यत्र[2] कार्यकारणं चितिच्छायापत्त्येत्युक्तम्

दुःखाभावः सुखमिति तत्प्रतिषेधार्थमाह ॥

दृष्टत्वादिति शेषः ॥

सुखे प्रमाणमाह ॥

पञ्चावयवयोगात्[3] सुखसंवित्तिः[4] ॥ २७ ॥

यद्यपि मानसप्रत्यक्षेण भावरूपं सुखमवसीयते, तथापि परबोधाय[5] प्रमाणमप्युक्तम् । पञ्चावयवयो-

१ So reads Aniruddha only ; Mahâdeva and the two other commentators add च । २ C omits अपि । ३ One of F. E. Hall's MSS. of Aniruddha has संयोगात्, Aph.[3] 332, note 2 । ४ "Nâgeśa has सुखादिसंवित्तिः" Aph.[3] 332, note 3 । ५ C परप्रबोधाय ।

गादिति[1] ह्यवयवमनुमानमिति निरस्तम्। प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनमिति[2]। अनेन पक्षधर्मत्वं सपक्षसत्त्वं[3] विपक्षाद्व्यावृत्तिरसत्प्रतिपक्षत्वमबाधितविषयत्वं सिद्धम्॥

सकृद्दर्शनान्न व्याप्तिरि[4]त्याह॥

पञ्च इन्द्रियाणि अवयवा इव यस्य मनसः, तस्य योगात् संनिकर्षात् सुखसंवित्तिः सुखज्ञानम्। तथा च मानसप्रत्यक्ष[5]विषयः सुखमिति भावः॥

अथ व्याप्तिः किं सकृत्सहचारदर्शनाद्गृह्यते, उत भूयः। आद्ये वह्निरासभयोरपि व्याप्तिर्गृह्येत, तथा च रासभादपि वह्न्यनुमानापत्तिः। नान्त्यः, शतशः सहचरितयोरपि पार्थिवत्वलोहलेख्यत्वयोर्हीरके[6] व्यभिचारात्। तस्मान्नानुमानं नाम प्रमाणं सुवचमिति केचित्। तद्दूषयति॥

न सकृद्ग्रहणात्संबन्धसिद्धिः॥ २८॥

स्वप्रतीतिविरोधात्। तथा च वह्निरासभयोः सकृद्दर्शनादनुमानं स्यात्। नैवं प्रतीयत इति॥

केयं व्याप्तिरित्यत्राह॥

---

१ A ०योगादिभिः। २ B ०निगममिति। ३ B सपक्षे सत्त्व। ४ B ०दर्शनादव्याप्ति०। ५ a ०प्रत्यक्षे। ६ a ०हीरे।

व्यभिचारादर्शनसहकृतं सहचारदर्शनं व्याप्तिग्राहकम् । तच्च सकृद्भूयो वेति नादर इति भावः । संबन्धसिद्धिः व्याप्तिग्रहणम् ॥

व्याप्तिस्वरूपमाह ॥

नियतधर्म[1]साहित्यमुभयो[1]रेकतरस्य वा व्याप्तिः ॥ २९ ॥

उभयोरिति समव्याप्तिकयोः कृतकत्वानित्यत्वयोः[2] । एकतरस्य विषमव्याप्तिकस्य धूमस्येति । तथा च

यावच्चाव्यतिरेकित्वं[3] शतांशेनापि शङ्क्यते[4] ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥

तत्त्वान्तरं व्याप्तिरिति । तन्निराकरोति ॥

धर्म आधेयः । नियतं आधेयसाहित्यं व्याप्तिरिति संबन्धः । तच्च समव्याप्तिके स्थले प्रमेयत्वाभिधेयत्वयोरुभयोः, विषमव्याप्तिके एकतरस्य धूमादेरिति व्याप्तिः ॥

पदार्थान्तरमिति मतं दूषयति ॥

न तत्त्वान्तरं, वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥

---

१ Corrected according to the other commentators; my MSS. of Aniruddha have ०साहित्य उभयो०. "Nâgeśa has, instead of नियत०, नियतं" Aph.[3] 334, note 3 । २ B ०त्वानित्ययोः । ३ BC ०रेकत्वं । ४ B शंक्यते ।

तत्त्वान्तरस्वीकारेऽप्यव्यभिचारो वक्तव्यः। स एवास्तु, किं वस्तुकल्पनयेति ॥

स्वमतमाह ॥

व्याप्तिस्तत्त्वान्तरत्वेऽपि यच्च व्याप्तिस्तस्याव्यभिचार[1] आवश्यक एवेति। स एव कुतो न व्याप्तिरिति भावः ॥

निजशक्त्युद्भवमित्याचार्याः ॥ ३१ ॥

अस्ति वह्निधूमयोर्निजा शक्तिः। सा द्वयोर्दर्शनेन गृह्यते। सैव व्याप्तिरिति ॥

एकदेशिमतमाह ॥

निजा सहजा या शक्तिः, तदुद्भवं नियतं वह्निसाहित्यं धूमे इत्याचार्याः। बहुवचनेन स्वाभिमतत्वं ज्ञापयति ॥

आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥

यदि निजा शक्तिः, अव्युत्पन्नस्यापि वस्तुनो दर्शनात् 'अत्रायं शक्त' इति ज्ञानं स्यात्। न चैवम्। तस्मादाधेयशक्तिर्वाच्येति ॥

युक्तिमाह ॥

---

१ a °स्तस्य व्यभिचार।

आधेयशक्त्या योगे संबन्धे सति साहित्यमिति शेषः। तथा च साहित्यमाधेयशक्त्युद्भवमिति। पञ्चशिख इत्येकवचनेन परमतमेतदिति सूचयति ॥

प्रसङ्गाच्छक्तेः शक्तपदार्थरूपतां निरस्यति ॥

न स्वरूपशक्तिर्नियमः[1], पुनर्वादप्रसक्तेः ॥ ३३ ॥

**यदि स्वरूपं शक्तिः, शक्तो मल्ल[2] इति पुनरुक्तं स्यात् ॥**

**युक्त्यन्तरमाह ॥**

स्वरूपं चासौ शक्तिश्चेति स्वरूपशक्तिः। तया नियमो न व्याप्तिर्न, किं त्वतिरिक्तया शक्त्या। शक्तेरनतिरिक्तत्वे दूषणमाह 'पुनर्वादप्रसक्तेः'। 'शक्तो मन्त्र' इत्यादौ पुनरुक्त्यापत्तेरित्यर्थः ॥

विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥

**[3]शक्तो देवदत्त इति प्रत्ययो न स्यात्, [4]किं तु देवदत्तो देवदत्त इति ॥**

**अपरां युक्तिमाह ॥**

देवदत्तो[5] देवदत्त इतिवत् शक्तो मन्त्र इति विशेषणमनर्थकं स्यात् ॥

---

१ Vijñâna has स्वरूपशक्तिर्नियमः। २ A मच्छ। ३ A prefixes यदि। ४ A inserts न। ५ b c देवदत्त।

पल्लवादिष्वनुपपत्तेः[१] ॥३५॥

पल्लवादिषु स्वरूपस्य तादवस्थ्यादप्रयुक्ते ऽपि[२] मन्त्रे[३] [४]विषापनोदनं स्यात् ॥

समाधानमाह ॥

पल्लवादिस्वरूपस्य मन्त्रप्रयोगात्पूर्वमपि सत्त्वेन मन्त्रप्रयोगादृते ऽपि विषापनोदनादि[५] स्यात् ॥

तर्ह्याधेयशक्तिरेवास्तु, किं सहजशक्त्येति चेत्, तत्राह ॥

आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥३६॥

निजा चासौ शक्तिश्चेति[६] निजशक्तिः, न तु स्वरूपमेव शक्तिः। तथा चाधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायत्वात्। तथा च शक्तेरविशेषादाधेयशक्तियोगो वा निजशक्तियोगो वेति समानो[७] न्यायः। यच्च वस्तुग्रहणे प्रथमं न गृह्यते, चित्रशक्तित्वात्पदार्थानां, यथा स्थितो ऽपि पितापुत्रसंबन्धो[८] विनोपदेशान्न गृह्यते। अत एवोक्तं 'निजशक्त्युद्भवमिति ॥

---

१ So reads Aniruddha only, Mahâdeva and the other commentators add च; cf. Aph.[3] 339, note 4। २ B ०द-प्रयुक्तेरपि। ३ C मन्त्रो। ४ B विदूषाप०। ५ b विषयायवोदनादि। ६ A C omit इति। ७ A सामान्यो, B समान। ८ B ०संबद्धो।

[1]पदार्थयोस्तादात्म्यं निषेधति ॥

यथान्वयव्यतिरेकाभ्यां शास्त्रेण च पल्लवादिषु व्रीह्यादिषु[2] चाधेयशक्तिसिद्धिः । तथैवान्वयव्यतिरेकाभ्यां तत्तद्वस्तुषु शास्त्रेण च तत्तत्कर्मभेदेषु शक्तिसिद्धिः ॥

शब्दार्थयोस्तादात्म्यं निषेधयति ॥

[3]वाच्यवाचकसंबन्धः शब्दार्थयोः ॥ ३७ ॥

तादात्म्यपक्षे घटो ऽपि श्रोत्रग्राह्यः स्यात्, शब्दो ऽपि चाक्षुषो भवेत्[4], अग्न्याद्युच्चारणे मुखदाहादिप्रसङ्ग इति ॥

अत्र हेतुमाह ॥

तादात्म्ये हि घटो ऽपि श्रोत्रग्राह्यः स्यात्, शब्दो वा चाक्षुषः स्यात्, अग्निशब्दोच्चारणे मुखदाहादिप्रसङ्गश्च ॥

शक्तिग्रहोपायमाह ॥

त्रिभिः संबन्धसिद्धेः[5] ॥ ३८ ॥

---

१ C prefixes न हि । २ b c omit व्रीह्यादिषु । ३ So reads Aniruddha only, Mahâdeva and the other commentators have वाच्यवाचकभावः संबन्धः । ४ B चाक्षुषः स्यात् । ५ So reads Aniruddha only, Mahâdeva and the other commentators have ०सिद्धिः ।

त्रिभिः प्रकारैर्व्युत्पत्तिग्रहणात् । आप्तोपदेशात्, यथा 'अयं घट' इति । वृद्धव्यवहारात्, यथा 'गामानय शुक्लां दण्डेने'ति, अत्र[1] प्रयोजकवृद्धवाक्यात्प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा बालस्य । प्रसिद्धपदसामानाधिकरण्यात्, यथा[2] 'पक्षी आम्रं भक्षयती'ति श्रुत्वाम्रभक्षणार्थं जानाति, पक्षीति तदानीं प्रतिपद्यते ॥

कार्ये व्युत्पत्तिरिति नियमं व्युदस्यति ॥

आप्तोपदेशेन, यथा 'अयं घट' इति । वृद्धव्यवहारेण, यथा 'गामानये'त्यादौ । प्रसिद्धपदसामानाधिकरण्येन, यथा 'सहकारतरौ मधुरं पिको रौतीत्यादौ ॥

कार्यान्विते शक्तिरिति मतं दूषयति ॥

न कार्ये नियम उभयथा दर्शनात् ॥ ३९ ॥

कार्ये व्युत्पत्तिर्दृष्टा, यथा 'अहरहः संध्यामुपासीते'ति । सिद्धार्थे च[3] दृष्टा, यथा 'हरिर्देवाधिदेवः' । तथा हि विध्यर्थवादमन्त्रात्मका वेदाः । विधौ [4]कार्यतैकार्थसमवेतायामिष्टसाधनतायां प्रामाण्यम् । विधिशक्तेरुत्त-

---

१ A C omit अत्र । २ A तथा । ३ B puts च after दृष्टा । ४ A C कार्यैकार्थ° ।

म्भकत्वेनार्थवादस्यापि पारंपर्येण प्रवर्तकत्वात्प्रामाण्यम्। विहितस्मारकत्वेन[1] मन्त्रस्यापि प्रामाण्यम्। यत्तु[2] प्रवृत्तिनिमित्तत्वान्मन्त्रार्थवादयोः प्रामाण्यं, न तु प्रतिपादकत्वं, तन्न। उत्पत्तावस्ति प्रवृत्त्यर्थत्वं, ज्ञप्तौ तु सिद्धार्थपरत्वमेव। तस्मात्सिद्धार्थप्रतिपादकयोरप्य[3]र्थवादमन्त्रयोः प्रामाण्यमिति ॥

अतीन्द्रियत्वाद्वेदार्थस्य कथमुभयथा व्युत्पत्तिरित्यत्राह ॥

कार्ये कार्यान्विते। नियमः शक्तिनियमः, तत्रैव शक्तिरिति यावत्। कार्य इव[4] सिद्धे प्रयोगदर्शनात् ॥

ननु वेदे कार्यान्विते शक्तिरस्तु। तत्राह ॥

[5]लोकव्युत्पन्नस्य [6]वेदार्थप्रतीतिः[7] ॥ ४० ॥

य एव लौकिकास्त एव वैदिका इति सामान्यादिहापि व्युत्पत्तिरिति ॥

१ C ०स्मारकत्वे। २ B अथ instead of यत्तु, C यत्तु अथ। ३ B omits अपि। ४ a इति। ५ So reads Aniruddha only; Mahâdeva and the others have लोके व्यु०। ६ a कार्यं० instead of वेदार्थ०। ७ Vijñâna has ०प्रतीतिः; cf. Aph.[3] 344, notes 2, 3।

भवेदेवं, यदि वेदस्य पौरुषेयत्वं स्यात्, न चैवमित्याह ॥

य एव लौकिकास्त एव वैदिका इति न्यायादिति भावः ॥

अथ वेदप्रामाण्यमाह ॥

न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्याप्यतीन्द्रियत्वात् ॥ ४१ ॥

ईश्वरस्य निराकृतत्वात् अन्यस्यासंभवात्, भ्रान्तेः पुरुषधर्मत्वेनाप्तत्वानिश्चयाद्वेदस्याप्रामाण्यापत्तेरिति । वेदाप्रामाण्ये [2]यागादावनाश्वास इति ॥

वेदप्रामाण्य[3]प्रतिपादनार्थमाह ॥

न वेदस्याप्रामाण्यं अपौरुषेयत्वात् । तच्च त्रिभिर्हेतुभिः, ईश्वरस्य निराकरणेन, अन्यस्यासंभवेन, भ्रान्तेः पुरुषधर्मत्वेनाप्तत्वानिश्चयेनेति। नन्वस्तु कश्चिद्दिग्निष्टो[4] जीवः कर्ता । तत्राह । तदर्थस्य वेदार्थस्य स्वर्गयागयोः साध्यसाधनभावादिरूपस्येन्द्रियाद्यगोचरत्वात् ॥

ननु धर्मो वेदार्थः, स च यागदधिशुक्लादिरूपो नातीन्द्रियः । तत्राह ॥

---

१ अपि is read by Aniruddha only and omitted by the others; cf. Aph.[3] 345, note 1। २ C योगा०। ३ A ०प्रामाण्यं। ४ a ०दिग्निष्ये।

न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात्[1] ॥ ४२ ॥

वैशिष्ट्यं[2] कालदेशपात्रापेक्षया, तन्निरपेक्षत्वे न स्वरूपतो धर्मत्वम्। अन्यथाऽशुद्धकाले म्लेच्छदेशे महापातकिभिः[3] कृता यज्ञादयो धर्महेतवः स्युः। न चैवम् ॥

अन्नस्य फलदर्शनाद्वेदप्रामाण्यमिति व्युत्पत्त्या किं क्रियत इत्यत्राह ॥

न यागादिमात्रं[4] धर्मः, शूद्रकृतयागादेरपि धर्मतापत्तेः, किं तु स्वर्गसाधनत्वावच्छिन्नः, स चातीन्द्रिय एव। कुतः। वैशिष्ट्यात्। [5]अधिकारिदेशकालादिवैशिष्ट्यं हि स्वर्गसाधनत्वांश[6] एवोपयोगि, न तु यागादिस्वरूपे ॥

व्युत्पत्तेरुपयोगमाह ॥

निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते[7] ॥ ४३ ॥

अयं शब्दो ऽत्र वाचकत्वेन मुख्यो ऽत्र गौण इति व्यवच्छिद्यते ॥

व्युत्पत्तिसिद्धिः कथं ज्ञायत इत्यत्राह ॥

बोधकताख्या शब्दस्य सहजा शक्तिर्व्युत्पत्त्या शक्तिग्रहेण[8] व्यवच्छिद्यते,

---

१ A C वैशेष्यात्। २ A C वैशेष्यं। ३ B adds च। ४ c ०मात्रः। ५ So far the commentary is missing in a। ६ a स्वर्गस्य धनत्वांश। ७ B विच्छिद्यते। ८ a शक्तिग्रहेणा।

मुख्यगौणताभ्यां व्यवस्थाप्यते। यस्य हि साक्षात्प्रत्ययस्तत्र मुख्यबोधकता, यस्य तु शक्यद्वारा तत्र गौणबोधकतेति। उपयुज्यते चैतत् 'मन्त्रस्य मुख्य एवार्थे[1] विनियोगो, न गौण' इत्यादिनिर्णये॥

शक्तिसिद्धिस्त्वर्थप्रत्ययरूप[2]कार्यानुमेयेत्याह॥

योग्यायोग्येषु प्रतीतिजनकत्वात्तत्सिद्धिः[3] ॥ ४४ ॥

प्रसिद्धा[4]प्रसिद्धेषु लौकिकवैदिकपदार्थेषु ज्ञानजनकत्वात् व्युत्पत्तिसिद्धिः[5] ॥

वेदनित्यत्वं निराकरोति॥

योग्यायोग्येषु लौकिकवैदिकेषु तत्सिद्धिः शक्तिसिद्धिः॥

न नित्यत्वं वेदानां कार्यत्वश्रुतेः[6] ॥ ४५ ॥

श्रुतिस्तावत् 'नाहरासीन्न [7]रात्रीरासीत्[8]' 'स तपोऽतप्यत, तस्मात्तपस्तेपानात्त्रयो वेदा अजायन्त[9]'। अनु-

---

१ a एवार्थं। २ a omits रूप। ३ A C and one of F. E. Hall's MSS. (cf. Aph.[3] 347, note 1) तत्सिद्धेः। ४ प्रसिद्धा° is missing in A। ५ A श्रुत्यन्तरासिद्धिः। ६ B a कार्यश्रुतेः; cf. Aph.[3] 347, note 4। ७ A C रात्रि°। ८ B °रासत्। ९ B जायन्त।

मानं च कृतकत्वादित्यादि। प्रत्यक्षेणाप्युच्चरितप्रध्वंसिनो वर्णा इति गृह्यन्ते। यत्तु 'स एवायं कवर्ण' इति प्रत्ययः, स सामान्यविषयः ॥

अनित्यत्वात्पौरुषेया वेदा इति। तत्राह ॥

'त्रयो वेदा अजायन्ते'ति श्रुतेः कृतकत्वेना[1]नित्यत्वानुमानात्। वर्णेषूत्पत्तिध्वंसयोः प्रत्यक्षाच्चेति बोध्यम् ॥

अनित्यत्वे[2] पौरुषेयत्वापत्तिः। तत्राह ॥

न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ॥ ४६ ॥

निराकृत ईश्वर इत्यभिसंधिः ॥

अन्य एव कर्ता भविष्यतीत्यत्राह ॥

ईश्वरनिराकरणादिति भावः ॥

अन्य एव कर्तास्त्वित्यत आह ॥

न[3], मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥

मुक्तस्य निःसङ्गत्वात्कर्तृत्वायोगात्, अमुक्तस्य युगपदुपादानानभिज्ञत्वादिति ॥

---

१ b ०न instead of ०ना०। २ a अनित्ये। ३ न is peculiar to Aniruddha and omitted by the other commentators।

अपौरुषेयत्वात्तर्हि नित्यत्वम्। अत आह ॥

मुक्तस्य निःसङ्गत्वेनामुक्तस्य धर्माद्यनभिज्ञत्वेन कर्तृत्वायोग्यत्वात्[1] ॥

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥ ४८ ॥

स्पष्टम् ॥

[2]अङ्कुरादीनामपि सकर्तृकत्वं कार्यत्वादिति पक्षे मुक्तस्य कर्तृत्वमित्यत्राह ॥

नह्यपौरुषेयत्वनित्यत्वयोर्व्याप्तिरस्ति, अङ्कुरादौ व्यभिचारात् ॥

अङ्कुरादीनामपि कार्यत्वात्सकर्तृकत्ववादिनं[4] प्रत्याह ॥

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥ ४९ ॥

अङ्कुरादीनां[5] कर्तुरदृश्यत्वात्प्रत्यक्षबाधः। अयोग्यश्च कर्ता नास्तीत्युक्तम्। आदिशब्दाद्व्याप्यत्वासिद्धिर्दर्शिता ॥

अनित्यत्वपौरुषेयत्वयोर्व्याप्तिर्नास्तीत्याह ॥

तद्योगे कर्तृयोगे दृष्टस्याकर्तृकत्वस्य बाधः। आदिशब्दात् अदृष्ट-

---

१ a कर्तृत्वाद्ययोग्यत्वात्, c कर्तृत्वाद्यग्यत्वात्, corrected from कर्तृत्वाद्योग्यत्वात्। २ There is a lacuna in B from here to the beginning of Sûtra 50; Vijñâna's commentary to Sûtra 49 is inserted instead। ३ b ॰त्वा॰ instead of ॰त्व॰। ४ a ॰वादिनः। ५ C adds अपि।

सकर्तृकत्वकल्पनम्[1] । कार्यत्वहेतुस्त्वप्रयोजक इति भावः ॥

किं तर्हि सकर्तृकम् । तत्राह ॥

यस्मिन्नदृष्टे ऽपि कृतबुद्धिरुपजायते, तत्पौरुषेयम् ॥ ५० ॥

यथा घटादिकं, न तु वृक्षादिषु । अदृष्टे ऽपीति कर्तर्यदृष्टे ऽपि । न कार्यमात्रं सकर्तृकं, किं तु कार्यविशेषः ॥

परतः प्रामाण्यं दूषयति ॥

अदृष्टे ऽपि कर्तरि । अङ्कुरादौ तु न कृतमिति बुद्धिः, किं तूत्पन्नमिति । पौरुषेयं सकर्तृकम् ॥

निजशक्त्यभिव्यक्तेः[2] स्वतः प्रामाण्यम् ॥ ५१ ॥

[3]निजशक्तिज्ञानजनकसामग्रीमात्राधीनं[4] प्रामाण्यं, न त्वधिकं गुणमपेक्षते, उत्पत्तिपक्षे । ज्ञानपक्षे[5] ऽप्यौत्सर्गिकी ज्ञानग्राहकाणां प्रामाण्यबोधशक्तिः[6] । तदभिव्यक्तेः

---

१ a ०सकर्तृत्वकल्पनं, b ०सकर्तृकत्वकल्पनं । २ Mahâdeva reads निजशक्त्याभिव्यक्तेः, cf. Aph.[3] 352, note 4; my MSS. bc are wrong in giving the reading of the other commentators । ३ Corrected; A C निजशक्तिः ज्ञा०, B निजशक्तिर्ज्ञा० । ४ A C insert प्रमाणानां । ५ ज्ञानपक्षे is missing in C । ६ B ०बोध्य०, C ०बोध०

स्वतः प्रामाण्यं, झटिति प्रवृत्तेश्च। यत्रापि[१] शङ्कानिवृत्तये प्रामाण्यजिज्ञासार्थं प्रमाणानुसरणं[२], तत्रापि कारणदोषोत्सारणाय,[३] न गुणाय। अत एवाप्रामाण्यं[४] परतः, तत्र दोषस्यापि कारणत्वादिति ॥

बौद्धमतं[५] दूषयति ॥

निजशक्त्यैव ज्ञानजनकनिजशक्त्यैवाभिव्यक्तेः, प्रमात्वस्येति शेषः। स्वतः प्रामाण्यं प्रमात्वावच्छिन्नजनकत्वं, न तु गुणाधीनं, येन वेदप्रामाण्यार्थमाप्तकर्तृकत्वं वेदस्यापेक्ष्येत। [६]अनाप्तकर्तृकत्वं पुनरप्रामाण्यप्रयोजकमिति। अधिकमाकरे ॥

इदं रजतमित्यादिभ्रमेषु बौद्धमतं दूषयति ॥

नासतः ख्यानं नृशृङ्गवत् ॥ ५२ ॥

इदं रजतमित्यसदेव शुक्तिरजततादात्म्यं प्रतिभाति। तन्न, असतोऽर्थक्रियाविरहात् ज्ञानजनकत्वानुपपत्तेः, यथा मनुष्यशृङ्गस्य ॥

[७]प्राभाकरमतं दूषयति ॥

---

१ A यत्राभि०। २ B प्रमाणानुस्मरणं, C प्रमाणानुसारणं। ३ A C ०दोषोद्धारणाय। ४ A एव प्रामाण्यं। ५ C बौद्धमानं। ६ bc नान्यकर्तृकत्वं। ७ A C प्रभा०।

असदेव शुक्तिरजततादात्म्यं भातीति यत्तन्न, असतो ऽर्थक्रियाविरहितत्वेन [1]ज्ञानजनकत्वानुपपत्तेः, नृशृङ्गस्येव ॥

प्राभाकरमतं दूषयति ॥

न, ततो बाधदर्शनात् ॥ ५३ ॥

इदं रजतमिति 'इदमि'ति पुरोवर्तिविषयं, 'रजतमि'ति स्मरणम्। द्वे इमे संवित्ती। भेदाग्रहात्प्रवृत्तिः ॥ न, अभेदग्रहणात्प्रवृत्तिदर्शनात्, नेदं रजतमिति बाधाच्च। न च सम्यग्ज्ञानस्य बाधो ऽस्ति। तथा[2] सत्ययं घट इति ज्ञाने जाते 'नायं घट' इति ज्ञानं स्यात् ॥

[3]वेदान्तिमतं दूषयति ॥

इदमिति रजतमिति च द्वे ज्ञाने, एकं ग्रहणमितरत्स्मरणम्। भेदाग्रहात्प्रवृत्तिः, न भेदग्रहादिति प्राभाकराः। तन्न, 'नेदं रजतमि'ति बाधदर्शनात्। अधिकमन्यत्र ॥

वेदान्तिमतं निराकरोति ॥

नानिर्वचनीयस्य, तदभावात् ॥ ५४ ॥

इदं रजतमित्यसत्त्वे ऽपरोक्षज्ञानाभावात् सत्यत्वे

---

१ ज्ञान is missing in a। २ B adds च। ३ B वेदान्त॰।

बाधाभावात्[१], अतः सदसद्विलक्षणा[२]निर्वचनीयत्वम्।
तथा च

न सत्त्वे बाधसंवित्तिर्न भानमसतो ऽपि च।
न द्वयात्म विरुद्धत्वादतस्तत्त्वान्तरं कुतः॥
मायामयत्वसिद्धौ तु प्रपञ्चस्य प्रमाणतः।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं [३]व्यावहारिकम्॥
अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम्।
प्रमाणभावं भजते[४] बाध[५]वैधुर्यहेतुतः॥
तस्मान्मायामयत्वे ऽपि युक्ता ब्रह्मणि मानता।
अद्वैतागमवाक्यानामिति तावद्व्यवस्थितम्॥

तन्न, इदं रजतमित्यनेनैव निर्वचनीयत्वात्, 'न सन्नासन्नि'त्यनिर्वचनीयत्वेन निर्वचनाच्च[६]॥

न्यायमतं दूषयति॥

तदभावात् 'न[७] सत् नासदि'त्यनिर्वचनीयत्वेन निर्वचनेनानिर्वचनीयाभावात्[८]॥

नैयायिकमतं निराकरोति॥

---

१ सत्वत्वे बाधाभावात् is missing in A; C has सत्वत्वे भावात्। २ B °णा° instead of °णा°। ३ A C व्यव°। ४ A C भजतां। ५ B भाव°। ६ B निर्वचनीयत्वाच्च। ७ तदभावात् न is missing in a। ८ a adds वा।

नान्यथाख्यातिः, स्ववचोव्याघातात् ॥ ५५ ॥

इदं रजतमिति शुक्तिरेव रजतात्मनावभासत[1] इति । न । अन्यदन्यात्मनावभासत[1] इति संविद्विरुद्धम्[2] ॥

आरोपितरजतमेव तत्रावभासत इति स्वमतमाह ॥

शुक्तिरेव रजतात्मनावभासत इति, आरोपितरजतमेव तत्रावभासत इति स्ववचसोः परस्परविरोधात् ॥

स्वमतमाह ॥

[3]सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥

इदं रजतमिति पुरोवर्तिविषयतया सत्, अबाधनात् । रजतविषयतया त्वसत्, बाधात् । तस्मात्सदसती[4] तत्त्वम् ॥

स्फोटं निराकरोति ॥

'इदं रजतं' सदसदात्मकम् । 'नेदं रजतमि'ति हि रजतस्य बाधो, न पुरोवर्तिन इति ॥

स्फोटं निराकरोति ॥

---

१ A C °त्मनाभासत । २ A C संविद्विरोधः । ३ A सदसद्ख्याति° । ४ B तस्मात्सती ।

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥ ५७ ॥

प्रतीतिर्वर्णेषु[1], अप्रतीतिः स्फोटे। तस्मान्न स्फोटात्मकः शब्दः। यदि वर्णाः किंचिदपि न प्रतिपादयन्ति, स्फोटप्रतिपादनमपि कुतः। अथ प्रतिपादयन्ति, किमन्तर्गडुना स्फोटेन, वर्णा एव प्रतिपादकाः सन्तु। नानात्वादपि[2] न स्फोटसिद्धिः॥

प्रत्यक्षबाधाद्वेदस्यानित्यत्वमुक्तम्। वर्णानामनित्यत्वं प्रतिपादयति॥

प्रतीतिर्वर्णानां, अप्रतीतिः स्फोटस्य वर्णातिरिक्तस्य। तस्मान्न स्फोटः शब्दः, किं तु वर्णा एव॥

ते चानित्या इत्याह॥

न शब्दनित्यत्वं कार्यताप्रतीतेः ॥ ५८ ॥

प्रत्यक्षादेः शब्द[3]श्रवणानन्तरं नास्तीति प्रतीतेः। अन्यथा घटस्यापि नित्यत्वं स्यात्[4]॥

प्रकृतिपुरुषादन्यत्सर्वं कार्यमिति [5]प्रतिपादनार्थं शङ्कते॥

१ B प्रतीतिवर्णे। २ A तथा अनुमानादपि। ३ B omits शब्द०। ४ B omits स्यात्। ५ A C add नित्यत्व०।

उत्पन्नो गकार[1] इत्यादिप्रतीतेः ॥

आशङ्कते ॥

पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव[2] घटस्य ॥ ५९ ॥

यथान्धकारस्थो घटो दीपेनाभिव्यज्यते, तथा वर्णा ध्वनिभिर्व्यज्यन्ते[3]। तदभावान्न सन्तीति प्रतिभानं, न त्वसत्त्वात्[4] ॥

समाधानमाह ॥

दूषयति ॥

सत्कार्यसिद्धान्तश्चेत्सिद्धसाधनम् ॥ ६० ॥

अभिव्यक्तिमाश्रित्य नित्यत्वमुच्यते, ततः सत्कार्यसिद्धान्तश्चेत्[5], सिद्धसाधनम् ॥

एक एवात्मा। तथा च[6]

सितनीलादिभेदेन यथैकं दृश्यते नभः।

---

१ a गकारस्य। २ A C ०व्यक्तिः प्रदीपेनेव। ३ B b ०र्व्यज्यंते। ४ This commentary is literally repeated by Mahâdeva। ५ B ०सिद्धान्त इति। ६ A C यथा च, B तथा।

भ्रान्तदृष्टिभिरेवात्मा तथैकः सन्पृथक्पृथक् ॥

तन्निराकरोति ॥

अभिव्यक्तिमाश्रित्य नित्यत्वकथनस्य को ऽभिप्रायः, किं सत्कार्यं न त्वसदिति, किं वा प्रकृतिपुरुषयोरिव नित्यत्वं वर्णानामिति। नाद्यः[1], इष्टापत्तेः। अपरत्र वक्ष्यते ॥

एकात्मवादं प्रत्याह ॥

नाद्वैतमात्मनो, लिङ्गात्तद्भेदप्रतीतेः[2] ॥ ६१ ॥

जरामरणादिलिङ्गनियमात् ॥ पूर्वत्र[3] सिद्धवदुक्तं, इदानीं साध्यत[4] इत्यपौनरुक्त्यम् ॥

मा भूत्सजातीयाद्वैतम्। अनात्मानो भविष्यन्ति घटादयस्त्वात्मरूपा[5] इति विजातीयाद्वैतं भविष्यतीत्यत आह ॥

आत्मनो ऽद्वैतं ऐक्यं न। कुतः। लिङ्गात् जरामरणादितः आत्मभेदसिद्धेः॥ पूर्वत्रानैक्यं[6] सिद्धवदुक्तं, इह तु साध्यत इति न पुनरुक्तिः ॥

नानात्मनापि, प्रत्यक्षबाधात् ॥ ६२ ॥

---

१ b नाद्या। २ A C लिङ्गाच्च भेदप्रतीतेः; Nâgeśa has नाद्वैतमात्मनो॰॰, cf. Aph.[3] 363, note 2। ३ A C पूर्वं। ४ B साध्यत। ५ B ॰स्वा॰ instead of ॰स्त्वा॰। ६ b c पूर्वत्रैक्यं।

[1]न अनात्मना घटादिना आत्मन एकत्वं, घटादीनां बाह्यत्वेन भेददर्शनात्। एकत्वे घटादीनामात्मत्वमात्मनश्च[2] परिणामित्वमिति ॥

सजातीयविजातीयाद्वैतं भविष्यतीत्यत्राह ॥

अनात्मना घटादिनापि नात्मन एकत्वं, प्रत्यक्षबाधात् ॥

किं च ॥

नोभाभ्यां, तेनैव ॥ ६३ ॥

अबाधितप्रत्ययेनैव[3] भेददर्शनात् ॥

एवमद्वैतश्रुतिविरोध इत्यत्राह ॥

तेनैव प्रत्यक्षबाधेनैव। उभाभ्यां आत्मानात्मभ्यां ऐक्यं न। 'त्वं सुखी, अहं दुःखी, घटो ऽयमि'त्याद्यबाधितप्रत्यया एवात्मैक्यबाधकाः[4] सन्तीति भावः ॥

नन्वद्वैतश्रुतेः का गतिः। तत्राह ॥

अन्यपरत्वमविवेकानां तत्र ॥ ६४ ॥

अन्धानां तच्छ्रुतेरन्यपरत्वं सामान्यपरत्वम् ॥

---

१ The first two words are missing in C। २ A C omit च। ३ A ०प्रत्ययेणैवा, C ०प्रत्ययेणैव !। ४ a ०बाधता।

**एकात्मवादिनां जगदुपादानकारणमपि[1] नास्तीत्याह ॥**

तत्र आत्मैक्यश्रुतौ आत्मत्वैकत्वप्रतिपादिकायां[2] अविवेकानां मूढानां अन्यपरत्वं आत्मैक्यपरत्वं भातीति शेषः। तथा च न श्रुतिविरोध इति भावः ॥

किं चैकात्मवादिनां जगदुपादानकारणमपि नोपपद्यत इत्याह ॥

**नात्माविद्या[3] नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥ ६५ ॥**

**कूटस्थत्वान्नात्मा कारणम्। अविद्याया असत्यत्वान्न कारणत्वम्। सत्यत्वे ऽद्वैतहानिः। संबन्धाभावान्नोभयं[4] कारणम् ॥**

**चिदानन्दस्वरूप आत्मेत्यत्राह ॥**

नात्मा कूटस्थत्वात्। अविद्या सती[5] चेत्, द्वैतापत्तिः, असती[6] चेत्, न कारणं वन्ध्यापुत्रवत्। अत एव नोभयमपि ॥

चिदानन्दरूप आत्मेति तन्मतं दूषयति ॥

---

१ A C ०करणमपि। २ b c आत्मैकत्व०। ३ Mahâdeva reads नात्मा नाविद्या; cf. Aph.[3] 366, note 2; my MSS. b c exhibit the wrong reading नात्मनाविद्या; Nâgeśa has नात्मानाद्यविद्या। ४ A C तयोरसंबन्धान्नोभयं। ५ Corrected; a सति, b संतीति, c संभवतीति। ६ a असति।

नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ॥ ६६ ॥

आनन्दः सुखम्। चित् ज्ञानम्। आनन्दचिद्रूपत्वे द्वैतत्वापत्तिः[1]। न च 'आनन्दो न[2] विषयजं सुखं, चितिर्वा वृत्तिज्ञानं, किं त्वन्यदेवालौकिकमि'ति वाच्यं[3], अलौकिकत्वेनाप्रामाणिकत्वात्[4]। प्रामाणिकत्वे[5] प्रमाणसत्त्वेनैव[6] द्वैतत्वम्। किं च, आत्मन आनन्दरूपत्वं आनन्दधर्मत्वं वा[7]। आनन्दधर्मत्वे द्वैतत्वापत्तिः, निर्गुणत्वादि[8]श्रुतिविरोधश्च। आनन्दरूपत्वे संसारावस्थायां कथमानन्दो नानुभूयते। अविद्यातिरोधानादिति चेत्, अमूर्तत्वादविद्याया न तया[9] कुड्यवत्तिरोधानसम्भवः[10]। अथाभिभवस्तिरोधानशब्दार्थः। नित्यस्य [11]विभुनो नाभिभवः॥ अविद्याया मिथ्यात्वादात्मनः सत्यत्वान्नानयोः[12] संबन्धः, वस्त्ववस्तुनोः संबन्धाभावात्, संबन्धे वा निःसङ्गादिश्रुतिविरोधः। आनन्दानुभवे च कर्मकर्तृविरोधः। किं चानन्दात्मत्वे किं प्रमाणम्। किं

---

१ B द्वैतापत्तिः। २ B omits न। ३ A वोध्यं। ४ B ०न० instead of ०ना०। ५ B प्रामाणिके। ६ B प्रमाणत्वेनै०। ७ B omits वा। ८ A C निर्गुणादि० . ९ B omits न तया। १० B ०धानासंभवः। ११ B चितनोर्नाभि०। १२ B सत्यत्वान्न तयोः।

प्रमाणानुसरणेन, स्वयमेव प्रमाणरूपत्वादात्मन इति चेत्, तन्न[१], प्रमाणव्यवस्थार्थं प्रमेयस्वीकारात्[२]। प्रमेयाभावात्किं प्रमाणेन परिच्छेत्तव्यम्। प्रमित्युपधानाभावाच्च प्रमाणत्वमेव नास्ति॥ चिद्रूपत्वं च नानन्दरूपत्वं, द्वयोर्भेदात्। तयोरलौकिकत्वेनाभेदसिद्धिरित्यपि न, अलौकिकत्वादेव [३]व्याप्तिग्रहणाभावात्। ततो नात्मनो द्विरूपत्वमिति॥ यदि च[४] मुक्तावानन्दो नानुभूयते, किं तेन। अनुभूयते चेत्, अनुभवित्रनुभवानुभवनीया वाच्याः। यथा च यावद्देहभावित्वेनात्मसाक्षात्कारादपि समाधिरित्युच्यते, देहपातानन्तरमात्मनः स्थितिरिति क्व समाधिः। तथा च[४] 'समाधौ सकलदुःखनिवृत्तेरानन्दलाभ' इत्यभिमन्यते। देहाभावात्समाधिनाशे क्वानन्दानुभवः। एवं च मुक्तावानन्दानुभवो भ्रान्त इति॥

अथानन्दश्रुतेः का वार्ता। तथा च

आनन्दं ब्रह्मणो विद्वान्[५] बिभेति कुतश्चन।
यतो वाचो निवर्तन्ते अप्राप्य[६] मनसा सह॥

इत्यत्राह[७]॥

---

१ B omits तत्। २ A C ०स्वीकारः। ३ C व्याप्त्यादिग्रहणा०। ४ B omits च। ५ A C रूपं न instead of विद्वान्। ६ A C ऽप्राप्य। ७ B omits इत्यत्राह।

आनन्दः सुखम्। चित् ज्ञानम्। तयोर्लोके भेदात्। अलौकिकमिदमिति चेत्, प्रमाणाभावे[१] न[२] सिध्येत्॥ किं च, चित आनन्दरूपत्वे संसारदशायां कुतो नानुभवः। अविद्यातिरोधानादिति चेत्, साऽसंबद्धा कथं तिरोदध्यात्। संबद्धा[३] चेत्, असङ्गत्वश्रुतिविरोधः॥ किं च, मुक्तावानन्दो ऽनुभूयते न वा। आद्ये, केनानुभूयते। आत्मनेति चेत्, एकस्य कर्तृकर्मविरोधः। न चेत्, किमानन्दरूपतया॥

अथ 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति श्रुतेः[४] का गतिः। तत्राह॥

दुःखनिवृत्तेर्गौणः॥ ६७॥

**व्यक्तम्॥**

**प्रकारान्तरमाह॥**

सुखव्यपदेश इति शेषः॥

प्रकारान्तरमाह॥

विमुक्तिप्रशंसा मन्दानाम्॥ ६८॥

---

१ a प्रमाणाभावो। २ bc omit न। ३ a संबंधा। ४ ac omit श्रुतेः।

**मन्दानां तामसानाम्। विमुक्तिप्रशंसा प्रवर्तनार्थं प्रोत्साहनमिति ॥**

**मनोवैभवं निराकरोति ॥**

मन्दानां राजसतामसानाम्। विमुक्तिप्रशंसा प्रवर्तनार्थं प्रोत्साहनमित्यर्थः ॥

मनोवैभवं निराकरोति ॥

न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा, वास्यादिवच्चक्षुरादिवच्च[1] ॥ ६९ ॥

**यच्च[2] 'शिरसि मे वेदना, पादे मे[3] सुखमि'ति ज्ञानं मनसो[4] विभुत्वं प्रतिपादयति, तदाशुसंचारित्वात्क्रमाग्रहणनिमित्तम्[5]। नानेन विभुत्वसिद्धिः ॥**

**दूषणान्तरमाह ॥**

यत्तु[6] 'शिरसि मे वेदना, पादे मे[7] सुखमि'त्यादिज्ञानं मनसो

---

१ Vijñâna and Nâgeśa omit वास्यादिवच्चक्षुरादिवच्च which is found in all my MSS. of Aniruddha and Mahâdeva; cf. Aph.[3] 370, note 3। २ B omits यच्च। ३ B यापैमि instead of पादे मे। ४ B मनो। ५ A ०क्रम०। ६ Corrected; my three MSS. have clearly यतु। ७ a omits मे।

विभुत्वसाधकमाहुः[१], तदाशुसंचारित्वान्मनसः क्रमाग्रहण[२]निमित्त-मिति न तेन विभुत्वसिद्धिः ॥

सक्रियत्वाद्गतिश्रुतेः[३] ॥ ७० ॥

सक्रियत्वादित्यनुमानं दर्शितम् । गतिश्रुतेरिति शब्दो दर्शितः ॥

अणुत्वे ऽपि [४]कारणाभावा[५]न्नित्यं[६] भविष्यतीत्यत्राह ॥

सक्रियत्वादित्यनुमानं दर्शितम् । गतिश्रुतेरिति सक्रियत्वे मानं दर्शितम् ॥

न निर्भागत्वं तद्योगाद्घटादिवत्[७] ॥ ७१ ॥

न निर्भागत्वं नाकारणवत्त्वम् । तद्योगात् भागयोगात् । किमस्य कारणम् । अहंकारः । षड्केन युगपद्योगात्परमाणूनां सभागत्व[८]सिद्धिः । तस्माद्घटादिवदनित्यं मनः ॥

---

१ a विभूत्वं । २ a ॰णा॰ instead of ॰णा॰ । ३ Mahâdeva adds च । ४ B adds स॰ । ५ C ह्यणुत्वे कारणाभावा॰ । ६ B ॰न्नित्यत्वं । ७ Vijñâna and Nâgeśa have घटवत् which reading is exhibited by my MS. B; the commentary shows, however, that घटादिवत् is the reading not only of Mahâdeva (Aph.[3] 372, note 2), but of Aniruddha also । ८ A C सभागित्व॰ ।

नित्यानित्यविभागमाह ॥

मनसो नाकारणकत्वं, कारणयोगात् । किमस्य कारणमिति चेत्, अहंकार इति गृहाण ॥

किं च ॥

प्रकृतिपुरुषयोरन्यत्सर्वमनित्यम् ॥ ७२ ॥

स्पष्टम् ॥

दिक्कालादीनां नित्यत्वात्कथं सर्वमनित्यमित्यत्राह ॥

प्रकृतेः कथं नित्यत्वम् । तत्राह ॥

न भागलाभो भागिनो[1] निर्भागत्वश्रुतेः ॥ ७३ ॥

न कारणलाभो भागिनो जगत्कारणस्य प्रधानस्य, निर्भागत्वश्रुतेः[2] 'मूलकारणत्वान्नास्य कारणान्तरमि'ति श्रुतेः ॥

आनन्दाभिव्यक्तिर्मुक्तिरि[3]ति । तद्दूषयति ॥

भागाः कारणानि यस्य कार्यत्वे न सन्ति, तस्य प्रधानस्य न[4] कारण-

---

१ See Aph.[3] 374, note 2 । २ A निर्भागित्व° । ३ B omits मुक्तिः । ४ a omits न ।

लाभो[1], निर्भागत्वश्रुतेः 'मायां तु प्रकृतिं विद्या'दिति साधारण[2]-प्रकृतित्वश्रुतेः, प्रधानस्य[3] कारणे[4] ऽनवस्थानाच्च ॥

आनन्दाभिव्यक्तिर्मुक्तिरिति[5] मतं दूषयति ॥

नानन्दाभिव्यक्तिर्मुक्तिर्[6]निर्धर्मकत्वात्[7] ॥ ७४ ॥

मुक्तौ धर्मधर्मिभावाभावात् । [8]साभिव्यक्तिः किं सर्वदास्ति । संसारदशायामपि मुक्तिप्रसङ्गः । अथ मुक्तौ क्रियते । कार्यभावस्यावश्यं[9] नाशात्पुनरनिर्मोक्ष इति ॥

विशेषगुणोच्छित्तिर्मोक्ष इति दूषयति ॥

किमात्मस्वरूप आनन्द उतान्यः । आद्ये संसारदशायां मुक्तिप्रसङ्गः । अन्त्ये कार्यभावस्यावश्यं नाशादनिर्मोक्षापत्तिः ॥

विशेषगुणोच्छेदो मोक्ष इति मतं निरस्यति ॥

न विशेषगुणोच्छित्तिस्तद्वत् ॥ ७५ ॥

विशेषनिषेधात्सामान्यगुणस्वीकारः । तथा च गुणयोगादनिर्मोक्षः ॥

---

१ b कारणालाभो । २ ac सावधारण॰ । ३ c प्रधान॰ । ४ a सकारणं । ५ ॰रिति is missing in c । ६ मुक्तिः is read by my three MSS. of Mahâdeva; cf. Aph.[3] 375, note 4 । ७ Vijñâna and Nâgeśa read ॰र्निर्धर्मत्वात्; so do my MSS. AC । ८ AC ऽभिव्यक्तिः । ९ B कार्यस्यावश्यं ।

देहपरिमाण आत्मा, तस्य देहमात्रान्नतिरेव मुक्तिरिति[१] । तद्दूषयति ॥

तद्वदिति न मुक्तिरित्यर्थः। सामान्यगुणस्वीकारे प्रमाणाभावादिति भावः ॥

देहपरिमाणस्यात्मनो देहान्निष्क्रान्तस्य [२]सततोर्ध्वगमनं मुक्तिरिति बाह्यमतं दूषयति ॥

न विशेषगतिर्निष्क्रियस्य[३] ॥ ७६ ॥

नोर्ध्वगत्या मुक्तिः, 'निर्गुणनिष्क्रियनिर्धर्मक[४] आत्मे'ति श्रुतेः। कुतो मुक्तिः, हस्तिकृमिदेहपरिणामित्वेन संकोचविकासाभ्यां सावयवत्वेनानित्यश्च स्यात् ॥

बौद्धमुक्तिं दूषयति ॥

देहपरिमाणत्वे ह्यात्मनो हस्तिकृमिदेहप्रवेशे उपचयापचययोरावश्यकत्वेन सावयवत्वं वाच्यम् । ततश्चानित्यता स्यात् । अतो व्यापकत्वमात्मन उचितम् । ततो निष्क्रियत्वादूर्ध्वगमनं न संभवतीति भावः ॥

बौद्धमुक्तिं दूषयति ॥

---

१ B omits इति । २ a संततो० । ३ a b ०गतिनिष्क्रियस्य ।
४ A C ०निर्धर्म ।

नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥७७॥

स किमाकारो ज्ञानस्वरूपः। तथा च ज्ञानस्याप्युच्छेद इति कस्य मुक्तिः। अथ धर्मः। क्षणिकत्वात्सर्वदा[1] तन्नाशे संसारिणामपि मुक्तिः स्यात्। अथ वासनावशात्तदा न मुच्यते, वासनोच्छित्तिरेव मोक्षो ऽस्तु, किमाकारोपरागोच्छित्त्या॥ आदिशब्दात्स्वच्छ[2]संवित्प्रवाहस्यापि नश्वरत्वात्कस्य मुक्तिरिति॥

बौद्धविशेषस्य[3] मुक्तिं दूषयति॥

आकारस्य विषयस्य उपरागः संबन्धः। तदुच्छित्तिर्न मुक्तिः, पूर्वपूर्वविषयसंबन्धोच्छेदस्य सर्वक्षणिकत्वेन संसारे ऽपि सुलभत्वात्, स्वच्छसंवित्प्रवाहस्यापि क्षणिकत्वात् आत्मनो ऽपि क्षणिकत्वेन कस्य मुक्तिरित्यादिदोषाच्च[4]॥

आत्मातिरिक्त[5]सर्वोच्छेदो मुक्तिरिति मतं दूषयति॥

न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥७८॥

स्पष्टम्॥

शून्यं मुक्तिरिति दूषयति॥

---

१ B transposes the two words क्षणिकत्वात् सर्वदा। २ C omits स्वच्छ। ३ B बौद्धविषयस्य विशेषस्य। ४ ac add आत्मनि। ५ c omits आत्मातिरिक्त॰।

को हि सर्वस्यापराधो, येन तदुच्छित्तिः प्रार्थनीया स्यात्। असंभवाच्च ॥

एवं मुक्तिरपि ॥ ७९ ॥

अपुरुषार्थत्वादेः। आदिशब्दादनुष्ठानाभावः सूचितः॥ [1]यद्यात्मा स्वीक्रियते, तदा तत्परिपन्थिनि द्वेषः, तदनुकूले च स्नेह इति तयोर्बन्धहेतुत्वादनिर्मोक्षः स्यात्। [2]नैवम्। नहि रागद्वेषमात्राद्बन्धः, किं तु तद्विशेषात्। यथा बौद्धपक्ष एव न संवित्संतानमात्राद्बन्धः, स्वच्छसंवित्संतानस्य मोक्षाङ्गत्वात्, तथा कैवल्यात्मपरिपन्थिनि [3]द्वेषान्निरु[4]पहितात्मस्थितौ रागान्[5] बन्धः, प्रत्युत मोक्षहेतुत्वमेवेति ॥

कालदेशकर्मविशेषान्मुक्तिरिति। तद्दूषयति ॥

अपुरुषार्थत्वादि[6]दोषात्, असंभवाच्चेत्यर्थः ॥

लोकोत्तरदेशे लोकोत्तरस्रक्चन्दनवनितादिलाभ एव मुक्तिरिति दूषयति ॥

---

१ B यथात्मा। २ C नैवं। ३ A विद्वेषा०। ४ A ०पा० instead of ०प०। ५ A inserts च। ६ a अपुरुषार्थादि०।

संयोगाश्च वियोगान्ता इति[1] न देशादिलाभो ऽपि ॥ ८० ॥

देशसंयोगस्य वियोगान्तत्वात्पुनः संसारः। आदिशब्दात्कालकर्मणोरपि परिग्रहः। कालयोगस्याप्येवम्। कर्मणश्च[2] क्षयित्वात्पुनः संसार इति ॥

भागस्य जीवात्मनो भागिनि ब्रह्मणि योगो मुक्तिरिति। तद्दूषयति ॥

स्पष्टम् ॥

भागस्य जीवस्य भागिनि ब्रह्मणि योगो मुक्तिरिति दूषयति ॥

न भागियोगो ऽभागस्य[3] ॥ ८१ ॥

न ब्रह्मणो भागो जीवात्मा, ब्रह्मणो भागाभावात्। योगस्य वियोगान्तत्वात्पुनर्बन्धप्रसङ्गः। अथ संसारकारणाभावान्न वियोग इति, एवं च स एवास्तु, किं भागयोगकल्पनया ॥

अणिमादिसिद्धिरेव[4] मुक्तिरित्यत्राह ॥

---

१ A C omit इति। २ A C omit च। ३ So reads Aniruddha only; Mahâdeva has न भागियोगो भागस्य like Vijñâna and Nâgeśa। ४ A C ०सिद्धिरपि।

[1]ब्रह्मजीवयोर्भा[2]गिभागत्वकल्पनायां मानाभावात्, योगस्य वियो-गान्तत्वाच्च[3] ॥

नाणिमादियोगो ऽप्यवश्यंभावित्वात्तदु[4]च्छित्तेरितर-वियोगवत्[5] ॥ ८२ ॥

तेषामपि कार्यत्वादनित्यत्वम् । आदिशब्दाल्लघिमा गरिमा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं यत्रकामावसायित्वमिति ॥

परमैश्वर्यपदप्राप्तेरेव[6] मुक्तिरित्यत्राह ॥

नेन्द्रादिपदयोगो ऽपि तद्वत् ॥ ८३ ॥

अनित्यत्वात् ॥

भौतिकानीन्द्रियाणीति[7] । तन्निरस्यति ॥

सूत्रे स्पष्टे ॥

इन्द्रियाणि भौतिकानीति निरस्यति ॥

---

१ a ब्रह्मणि instead of ब्रह्म० । २ c ०भंगी० । ३ a ०भावित्वात्० । ४ A ०त्ति० instead of ०त्ते० । ५ So reads Aniruddha only ; Mahâdeva has ०रितरयोगवत् like Vijñâna and Nâgeśa ; cf. Aph.[3] 380, note 1 । ६ C ०प्राप्तिरेव । ७ B omits इति ।

न भूतप्रकृतित्वमिन्द्रियाणामाहंकारिकत्व[1]श्रुतेः ॥ ८४ ॥

तथा च,

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च
खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य[2] धारिणी ॥

भूतप्रकृतित्वमिति तु येनेन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते, तस्य तत्प्रकृतित्वाभिमानाद्व्यपदेशः ॥

षट्पदार्थज्ञानान्मुक्तिरित्यत्राह ॥

[3]भूतप्रकृतित्वमित्यत्र बहुव्रीहेस्त्वप्रत्ययः । सात्त्विकाहंकार[4]कार्यत्वं हीन्द्रियाणां श्रूयते पुराणादिषु । भूतप्रकृतित्वमिति लौकिको व्यपदेशस्तु येनेन्द्रियेण यद्भूतकारणं तन्मात्रं गृह्यते, तस्य तत्प्रकृतित्वाभिमानकृतः ॥

षट् पदार्थाः, तज्ज्ञानान्मुक्तिः, षोडश पदार्थाः, तज्ज्ञानान्मुक्तिरिति वैशेषिकनैयायिकमतदूषणाय सूत्रे ॥

न षट्पदार्थनियमस्तद्बोधान्मुक्तिः[5] ॥ ८५ ॥

---

१ The statement of F. E. Hall, Aph.[3] 381, note 2, that Mahâdeva has, instead of आहंकारिकत्व०, अहंकारत्व०, is not confirmed by my MSS.; b आहंकारिकत्व०, c अहंकारिकत्व०, a अहंकारकत्व० । २ A C विश्व० । ३ b भूति० । ४ b सात्त्विकारामहंकार० । ५ Thus Aniruddha only, the other commentators add च ; cf. Aph.[3] 381, note 4 ।

'द्रव्यगुणकर्मसामान्यविशेषसमवाया इति। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति द्रव्याणि। रूपरसगन्धस्पर्शाः[1] संख्या परिमाणानि[2] पृथक्त्वं[3] संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नश्च[4] गुरुत्वद्रवत्वस्नेह[5]संस्कारधर्माधर्मशब्दा गुणाः। उत्क्षेपणावक्षेपणा[6]कुञ्चनप्रसारणगमनानि कर्माणि। परमपरं च सामान्यम्। नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। अयुतसिद्धानां यः संबन्ध इहप्रत्ययहेतुः समवाय' इति नास्ति नियमोऽनियतपदार्थवादित्वात्सांख्यानाम्। न च तद्बोधान्मुक्तिः, आत्मज्ञानादेव मुक्तेः॥

षोडशपदार्थज्ञानान्मुक्तिरित्यत्राह[7]॥

षोडशादिष्वप्येवम्॥ ८६॥

'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति[8]। प्रत्य-

१ B ॰स्पर्शं॰। २ B परिमाण॰। ३ B पृथक्त्व॰। ४ Thus all three MSS; Vaiśeshika Sûtra I. 6 प्रयत्नाश्च। ५ B transposes the two words ॰द्रवत्व-स्नेह॰। ६ Corrected; AC उत्क्षेपणापक्षेपणा॰, B उत्क्षेपणविक्षेपणा॰। ७ AC ॰रिति तत्राह। ८ इति is read by my three MSS., but not in Nyâya Sûtra I. 1।

क्षानुमानोपमानशब्दाः प्रमाणानि। आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः[1] प्रमेयम्। समानानेक[2]धर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्य[3]व्यवस्थातश्च विशेषापेक्षो विमर्शः[4] संशयः। यमर्थम[5]धिकृत्य प्रवर्तते[6] तत्प्रयोजनम्। लौकिकपरीक्षकाणां[7] यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः। तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः। स चतुर्विधः,[8] सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्। प्रतिज्ञाहेतूदाहरणोपनय[9]निगमनान्यवयवाः। अविज्ञाततत्त्वे ऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः। विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः। यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। स प्रति-

---

१ तु is added in Nyâya Sûtra I. 9, but omitted by my MSS. । २ B समाने॰ । ३ Corrected according to Nyâya Sûtra I. 23; my MSS. have ॰नुपलब्धि॰ । ४ A C विमर्षः । ५ B omits अर्थम् । ६ A C प्रवर्त्तते । ७ B ॰परीक्षिकाणां । ८ स चतुर्विधः is not found in the Nyâya Sûtra itself, but at the end of Vâtsyâyana's commentary to I. 26 । ९ B ॰णोपननन॰ ।

पक्षस्थापनाहीनो वितण्डा । [१]सव्यभिचार[२]विरुद्धप्रकरणसमसाध्यसमातीतकाला[३] हेत्वाभासाः । वचनविघातो ऽर्थविकल्पोपपत्त्या छलम् । तत्त्रिविधं, वाक्छलं सामान्यच्छलमुपचारच्छलं च[४] । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरण[५]हेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्य[६]कार्यसमाः । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्[७] । प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो ऽपसिद्धान्तो[८] हेत्वाभासाश्च निग्रहस्थानानि[९]' । इयन्त इति न नियमः, न वा तद्बोधान्मुक्तिः । आदिशब्दादन्ये ऽपि नियतपदार्था निराकार्याः ॥

---

१ A omits स० । २ A ०रा० instead of ०रु० । ३ B ०काला । ४ Nyâya Sûtra I. 52 reads चेति । ५ A C ०प्रकरणा० । ६ Corrected according to Nyâya Sûtra V. 1. 1; A C ०नुपलब्ध्यानित्यनित्य० ; in B there is a lacuna । ७ A स्थानानां । ८ B ऽसिद्धान्तो । ९ B omits ०स्थानानि ।

नित्याश्चतुर्विधाः परमाणवः, तैरेव महाभूतारम्भात्किं प्रधानेनेत्यत आह ॥

आदिशब्दादन्ये ऽपि नियतपदार्था निराकार्याः ॥

नित्यैश्चतुर्विधैः[1] परमाणुभिर्जगदारम्भ इति दूषयति ॥

नाणुनित्यता तत्कार्यत्वश्रुतेः ॥ ८७ ॥

प्रधानात्सर्वमजायत, प्रकृतिपुरुषादन्यत्सर्वमनित्यमिति श्रुतेः कार्यत्वात्परमाणूनां न नित्यत्वं कारणत्वं वा ॥

एवं च परमाणुत्वमेव न भवतीत्याह ॥

प्रकृतिपुरुषयोरेव[2] नित्यत्वश्रवणेनेतरस्य सर्वस्य कार्यत्वावगमादित्यर्थः॥

कार्यत्वादेव च परमाणुर्न निरवयव इत्याह ॥

न तन्निर्भागत्वं[3] कार्यत्वात् ॥ ८८ ॥

यत्कार्यं, न तन्निर्भागि, यथा पट इति ॥

उद्भूतरूपवत्त्वाच्च प्रत्यक्षमित्यत[4] आह ॥

---

१ b c add नियमैः । २ b °रेवेति । ३ So reads Aniruddha only, the others न निर्भागत्वं; cf. Aph.[3] 383, note 2 । ४ Between प्रत्यक्षं and इति, my MSS. add न चाणु [:, C वायुः] तथेति कथं प्रत्यक्षं; this clause has been blotted out by me, as totally spoiling the connexion with the next Aphorism ।

परमाणूनामिति शेषः। यत्कार्यं, तन्न निर्भागं, यथा घट इति ॥

उद्भूतरूपनिबन्धनं द्रव्यप्रत्यक्षत्वमिति दूषयति ॥

न रूपनिबन्धनात्प्रत्यक्षनियमः[१] ॥ ८९ ॥

'इहायं पक्षी'त्याकाशस्य प्रत्यक्षत्वाद्व्यभिचारादुद्भूतरूपनिबन्धनान्न[२] प्रत्यक्षत्वनियमः। अलौकिके[३] च समाधिबलजे[४] योगिप्रत्यक्षे न पर्यनुयोगोऽस्ति ॥

अणु महद्दीर्घं ह्रस्वमिति चतुर्विधं[५] परिमाणं नास्तीत्याह ॥

'इहायं पक्षी'त्याकाशस्य प्रत्यक्षत्वादिति ॥

अणु महद्दीर्घं ह्रस्वमिति चतुर्धा परिमाणमिति[६] दूषयति ॥

न परिमाणचातुर्विध्यं[७] द्वाभ्यां तद्योगात् ॥ ९० ॥

---

१ So read Aniruddha and Mahâdeva only, Vijñâna and Nâgeśa have ०प्रत्यक्षनियमः; cf. Aph.[3] 384, note 2; a प्रत्यक्षत्वमिति नियमः। २ A C ०निबन्धनत्वान्न। ३ C अलौकिकत्वे। ४ A समानाधि०, C समधि०। ५ B चतुर्विध०। ६ b परिमाणानामिति। ७ One of F. E. Hall's MSS. of Aniruddha has परिमाणे, cf. Aph.[3] 384, note 5।

महदणुभ्यां[1] कार्यकारणयोगाद्व्यवहारसिद्धेः[2]। एतत्प्रभेदा एवान्ये परिमाणभेदा इति ॥

प्रकृतिपुरुषव्यतिरिक्तं[3] सामान्यं नित्यमस्तीत्यत्राह ॥

महदणुभ्यामेव तयोः कार्य्यकारणयोर्योगात्, अन्येषां परिमाणानां महदणुभेदत्वेनैवोपपत्तेः ॥

प्रकृतिपुरुषाभ्यामन्यत्[4]सामान्यं नित्यमिति । [5]तद्दूषयति ॥

अनित्यत्वे ऽपि स्थिरतायोगात्प्रत्यभिज्ञानं सामान्यस्य ॥ ९१ ॥

यथा 'सो ऽयं देवदत्त' इति न सामान्यविषया प्रत्यभिज्ञा, तथाऽनित्यत्वे ऽपि सामान्यस्य बहुकालस्थैर्यात्[6] ज्वालादिषु[7] प्रत्यभिज्ञानमिति ॥

सामान्यासत्त्वं निराकरोति ॥

यथा 'सो ऽयं देवदत्त' इति न सामान्यविषया प्रत्यभिज्ञा, किं तु व्यक्तिविषया, व्यक्तेः स्थिरत्वात्, तथा सामान्यस्यापि स्थिरत्वात्प्रत्यभिज्ञा, न तु नित्यत्वात् ॥

---

१ B महदणुत्वाभ्यां । २ B कार्यवस्तुयोगा॰ । ३ C omits ॰व्यतिरिक्तं । ४ b c प्रकृतिपुरुषान्य॰ । ५ a omits तत् । ६ C ॰स्थैर्यात्कृत । ७ B ज्ञानादिषु ।

न तदपलापस्तस्मात् ॥ ९२ ॥

न सामान्यापलापः, प्रत्यभिज्ञानात् परोक्तयुक्तेः प्रत्यक्षबाधात् ॥

अस्त्येकाकारा बुद्धिः, [1]सान्यनिवृत्तिपरेत्यत आह[2] ॥

तस्मात् प्रत्यक्षात् तदपलापः सामान्यापलापो न कार्यः । अबाधितप्रत्यक्षस्य विषयसाधकत्वादिति भावः ॥

अन्यापोहो[3] जातिरिति निरस्यति ॥

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥ ९३ ॥

अभावरूपत्वे प्रतियोगिस्मरणाधीनं ज्ञानं लभ्येत[4], न तु विधिमुखतयेति ॥ तथा च

सिद्धश्चागौरपोह्येत, गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ।
गव्यसिद्धे त्वगौर्नास्ति तदभावे च[5] गौः कुतः ॥

सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यतीत्यत आह ॥

---

१ A सामान्यनिवृत्ति॰, C साम्यनिवृत्ति॰ । २ B ॰परा इत्यत्राह । ३ b अन्यापौहो । ४ Corrected; A C लभेत, B लभते । ५ A C omit च ।

गोत्वादेः अगोभेदरूपत्वं न। कुतः। भावप्रतीतेः अगोरूपप्रतियोगि[1]-स्मरणं विनैव भावरूपतया तत्प्रतीतेः। अत एवोक्तं . . . . .[2] इति॥

सादृश्यं पदार्थान्तरमिति निरस्यति॥

न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः॥ ९४॥

भूयोऽवयवसामान्ययोगः सादृश्यं, न तत्त्वान्तरं, प्रत्यक्षेणैव बहुतरतथावयव[3]ग्रहणात् 'तत्सदृशो ऽयमि'ति ज्ञानोत्पादात्॥

प्रकारान्तरमाह॥

तत्तद्द्रव्यगुणादिरूपस्यैव प्रत्यक्षेणोपलम्भादित्यर्थः॥

[4]निजधर्माभिव्यक्तिर्वा वैशिष्ट्यात्तदुपलब्धेः॥ ९५॥

[5]अस्ति पदार्थानां निजा शक्तिः। सा तुल्यपिण्डान्तर-

---

१ c ०प्रतियोगी०, a ०प्रतीते योगी०। २ Here follows the same quotation as in Aniruddha's commentary (b स्ववोह्येत, a b c न भावः instead of नञा यः)। ३ A बहुतरातथावयव०, B बहुतराल्पावयव०, C बहुतरावयव०। ४ So reads Aniruddha only; Mahâdeva has निजशक्त्यभिव्यक्तिर्वा like Vijñâna and Nâgeśa; cf. Aph.[3] 387, note 4। ५ One leaf is missing in B, though the numeration is not interrupted; the lacuna reaches into the commentary to Aphorism 104।

दर्शनादभिव्यक्ता विशिष्टा सती 'सदृशो ऽयमि'ति सादृश्योपलब्धेः कारणं, न तु तत्त्वान्तरं सादृश्यम् ॥

संज्ञासंज्ञिसंबन्धज्ञानहेतुः सादृश्यमिति तत्सिद्धिरित्यत्राह ॥

निजशक्त्यभिव्यक्तिरिति अभिव्यक्ता[1] निजशक्तिरित्यर्थः। अभिव्यक्ता तत्तत्कार्यानुकूलतया सिद्धा। वैशिष्ट्यात् तादृशशक्तिसंबन्धात्। तदुपलब्धेः सादृश्योपलम्भादित्यर्थः। तथा च, तत्तत्पदार्थनिष्ठा शक्तिरेव सादृश्यप्रतीतिविषय इति भावः ॥

न संज्ञासंज्ञिसंबन्धो ऽपि[2] ॥ ९६ ॥

न संबन्धज्ञानहेतुः सादृश्यं, व्यभिचारात्, अन्यथाप्युपदेशादेः संज्ञासंज्ञिसंबन्धनिश्चयात्। करणव्युत्पत्त्या विषयिणो ज्ञानस्योपलक्षणम् ॥

शब्दार्थयोर्नित्यः संबन्ध इति निरस्यति ॥

नित्य इति शेषः ॥

किं बहुना, शब्दार्थयोः संबन्ध एवानित्य इत्याह ॥

न संबन्धनित्यतोभयानित्यत्वात् ॥ ९७ ॥

शब्दार्थयोरनित्यत्वात्कथं संबन्धो नित्यः स्यात् ॥

१ a अभिव्यक्तया। २ "The reading of Nâgeśa is न संज्ञासंज्ञिनोः संबन्धो ऽपि" Aph.[3] 388, note 4।

**अजसंबन्धमापकरोति ॥**

स्पष्टम् ॥

अजसंबन्धं निराकरोति ॥

नाजः संबन्धो धर्मिग्राहकप्रमाण[1]बाधात् ॥ ९८ ॥

**संयोगो भवन्कर्मजो भवेत्, न च नित्यस्य व्यापकस्य क्रियास्ति। महदादयश्चानित्याः, कथं तत्संयोगो नित्यः। आत्मनां च निर्धर्मत्वान्न तैः प्रधानेन संयोगोऽस्ति। किं च[2], येन प्रमाणेन वस्तु गृह्यते तेनैव संयोगग्रहणमिति धर्मिग्राहकप्रमाणबाधः ॥**

**समवायं निरस्यति ॥**

विशिष्टप्रतीत्या विशेषणविशेष्याधीनसंबन्धस्यैव सिद्धिः तस्य च विशेषणविशेष्याभावे[3] ऽसंभवात् संबन्धस्याजलमयुक्तमिति ॥

समवायं निरस्यति ॥

न समवायोऽस्ति[4] प्रमाणाभावात् ॥ ९९ ॥

---

१ °प्रमाण° is read by Aniruddha only, the others have °मान° instead; cf. Aph.[3] 390, note 3। २ Conjectural; A C, the two MSS. only available here, have न च which is evidently wrong। ३ b °ष्याभावो। ४ "The reading of Nâgeśa is तन्नाप्यस्ति" Aph.[3] 391, note 3।

समवायः संबद्धो[1] ऽसंबद्धो[2] वा। असंबद्धत्वे[3] कथमन्यं संबन्धिनं कुर्यात्। संबन्धित्वे ऽन्यसंबन्धस्यासंभवात् समवाय एव[4] वक्तव्यः। तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थानान्नास्ति समवायः। यस्त्वविभागेन संप्रतिभासः स संयोगविशेषवैचित्र्यात्, यथा तप्तायःपिण्डे वह्नेः[5] ॥

यदि समवायो नास्ति, कथं शुक्लः पट इति अश्वो गच्छति गौरयमिति ज्ञानमि[6]त्यत्राह ॥

प्रमाणाभावमेवोपपादयति ॥

उभयत्राप्य[7]न्यथासिद्धेः[8] प्रत्यक्षमनुमानं वा[9] ॥ १०० ॥

उभयत्रापि तादात्म्येनैवोपपत्तेः, अन्यथा सामानाधिकरण्यं न स्यादिति ॥

अनुमेया क्रिया स्यादित्यत्राह ॥

समवाये[10] हि शुक्लो[11] घट इत्यादिप्रत्यक्षं प्रमाणं, विशिष्टप्रतीति-

---

१ A संबंद्धो। २ A ऽसंबंद्धो, C ऽसंबंधो। ३ A असंबंधत्वे। ४ Corrected, A C समवायो वा। ५ Corrected, A C वह्निः। ६ इति ज्ञानम् is missing in A। ७ My MSS. of Aniruddha omit अपि which is read by the other commentators, and likewise required as Aniruddha's reading by his explanation। ८ The omission of न which is read by the others is peculiar to Aniruddha; cf. Aph.[3] 392, note 1; a ०सिद्धिर्न। ९ "Nâgeśa gives प्रत्यक्षानुमाने" Aph.[3] 392, note 2। १० a समवायो। ११ C शुक्ल।

विशेषणविशेष्योभयसंबन्धविषया[1] विशिष्टप्रतीतित्वात् दण्डीति प्रतीतिवदनुमानं च। उभयत्रापि तादात्म्येनैवान्यथासिद्धिः[2]। 'इह तन्तुषु पट' इत्यादिप्रतीतिस्तु स्ववासनामात्रकल्पिता, नार्थसाधिका[3]। किं च, समवायः संबद्धः[4] संबन्धिनौ संबन्धयेत्, असंबद्धो वा[5]। आद्ये तस्यापि संबन्धान्तरं वाच्यमित्येवमनवस्था। समवायस्य स्वरूपमेव संबन्धश्चेत्, आदावेव कुतो न तत्। असंबद्धत्वं[6] त्वन्याय्यमेवेति ॥

देशान्तरसंयोगविभागाभ्यामनुमेयैव क्रिया, न प्रत्यक्षा, सूर्यक्रियावदिति मतं निरस्यति ॥

नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेवा[7]परोक्षप्रतीतेः ॥ १०१ ॥

**निकटस्थस्य क्रियाक्रियावतोरेवापरोक्षप्रतीतेः। अन्यथा सिद्धस्य प्रत्यक्षस्य बाधाद्यदि संयोगविभागाभ्यां[8] कर्मानुमीयते, तयोरुभयवृत्तित्वाद्वृक्षमूलादग्रं गच्छति पुरुषे वृक्षेऽपि कर्मानुमीयेत। ननु पुरुषकर्मणा संयोगविभागसिद्धौ किमर्थं वृक्षे कर्म स्वीकर्तव्यम्। उत्पत्तौ**

---

१ b ०विषय। २ b ०नैव सिद्धिः, c ०नैवासिद्धिः। ३ b ०साधिकाः। ४ Corrected; a b संबंद्धः, c संबंधः। ५ असंबद्धो वा is missing in b। ६ Corrected; a असंबंधत्वं, b असंबद्धसंबंधत्वं, c असंबंद्धसंबंधत्वं। ७ Nâgeśa omits एव at both places in this Aphorism; cf. Aph.[3] 393, notes 2 and 3। ८ A वियोगाभ्यां।

भवेदेवं, अव्यभिचारात्तु संयोगविभागाभ्यां दृष्टे कर्मानुमानं न निवर्तते, किं च, अन्धकारे[1] 'भुजाग्रं मे कम्पते' इत्यादौ कम्पमात्रज्ञानं भ्रान्तिः[2]। सूर्यक्रियानुपलम्भश्चातिदूरादिदोषात् ॥

पञ्चभूतारब्धं शरीरमित्यत्राह ॥

नेदिष्ठस्य अतिनिकटवर्तिनः। तत्तद्वतोः क्रियाक्रियावतोः। तथा चानुभवापलापो नोचित इति भावः। सूर्यक्रिया तु दूरस्थत्वान्न प्रत्यक्षा ॥

पञ्चभूतारब्धं शरीरमिति दूषयति ॥

न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात्

॥ १०२ ॥

बहूनां भिन्नजातीयानाम्। उपष्टम्भकत्वे तु चतुर्णां निमित्तत्वमस्त्येव। तेन च पाञ्चभौतिकत्वमुच्यत इति ॥

नास्ति सूक्ष्मशरीरं प्रमाणाभावादित्यत्राह ॥

उपादानत्वायोगादित्यर्थः। किं च, शरीरस्य पाञ्चभौतिकत्वे घटाकाशसंयोगस्येवाप्रत्यक्षत्वापत्तिः, योग्यसमवेतस्यैव प्रत्यक्षत्वनियमात् ॥

---

१ C किं चनुकारे!। २ भ्रान्तिः is missing in C।

शरीरं द्विविधमित्याह ॥

न स्थूल[१]मिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥

मनसो निराश्रयस्य गत्यभावान्मरणे देहप्राप्तये मनस आश्रयो वक्तव्यः। स एवातिवाहिकं सूक्ष्मशरीरमिति। श्रुतिरपि ‘अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः’। पुरि स्थूलशरीरे शेत इति पुरुषः सूक्ष्मदेहः ॥

अप्राप्तप्रकाशकमिन्द्रियं दूरे शब्दोपलम्भात् काचाभ्रस्फटिकान्तरोपलब्धेश्चेत्यत्राह ॥

मनसो निराश्रयस्य गत्यभावाद्देहान्तरगमने आश्रयो वाच्यः। स एवातिवाहिकं सूक्ष्मं च शरीरमित्युच्यते। ‘अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि’त्यत्र पुरुषपदवाच्यमपि तत्, पुरि स्थूलशरीरे शेत इति व्युत्पत्तेः ॥

[२]नेन्द्रियाणां प्राप्यकारित्वनियमः, चक्षुषस्तैजसत्वेन विषयदेशे गमनसंभवे ऽपि श्रोत्रादेस्तदभावात्। किं तु शब्द एव वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श्रोत्रदेशं गतः श्रोत्रेण गृह्यते। गन्धो ऽपि साश्रयो घ्राणदेश[३]मागतो घ्राणेन। एवमन्यत्रापि। दूरे[४] शब्द इत्यादिप्रतीतिस्तु भ्रान्तिरेव कारणशब्दविषयिणी [५]वेत्यादिमतं निरस्यति ॥

---

१ C सूक्ष्मं। २ a नेन्द्रियाणामप्राप्य०। ३ a b घ्राणादेश०। ४ b c दूर। ५ c clearly चेत्यादि०।

नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ ॥

नाप्राप्तार्थप्रकाशकत्वं यत्प्राप्तप्रकाशकत्वम्। श्रोत्रं वृत्तिद्वारेण शब्देन सह संबध्यते। काचादयस्तु स्वच्छत्वान्न चक्षुःप्रसारं प्रतिबध्नन्ति। दूरे च वृत्तिद्वारेण वस्तुग्रहणम्। यद्यप्राप्तेर्न[1] गृह्णाति, कुड्यव्यवहितवत् दूरत्वेनाप्राप्तेरविशेषादव्यवहितमपि न गृह्णीतेति[2]। अथाप्राप्तेरपि गृह्णाति। अविशेषाज्जगदुदरवृत्ति सर्वं गृह्णीयादिति ॥

यदि प्रसारि चक्षुः, तैजसं तर्हीत्यत्राह ॥

अप्राप्तानां विषयासंबद्धानां[3] प्रकाशकत्वमिन्द्रियाणां न, अप्राप्तेः असंबन्धात्। अथ व्याप्तत्वादिन्द्रियाणामस्त्येव संबन्धः। तत्राह 'सर्वप्राप्तेः'। तथा च जगदुदरवर्ति सर्वमेव गृह्णीयुः। तस्माद्विलक्षणः संबन्ध आवश्यक इति भावः ॥

स[4] च वृत्तिरित्याह ॥

न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥ १०५ ॥[5]

---

१ A यद्यप्राप्ते न। २ B गृह्णेत। ३ C विषयासंबंधानां। ४ b सा। ५ Mahâdeva puts this Aphorism after 107।

तेजस इवापसर्पणाद्दूरे ऽपि प्रकाशकत्वात्तैजसमित्य-[1][2] भिमानः। वस्तुतस्तु वृत्तिद्वारेण संबन्धात्तत्सिद्धेः प्रमेयसिद्धेः ॥

वृत्तेरप्रत्यक्षत्वात्कथं वृत्तिसिद्धिरित्यत्राह ॥

तेजस इवापसर्पणात् दूरगमनात् न चक्षुः।

वृत्तयः प्रसरद्रूपाः स्फुरिताचक्षु[3] यत्र च।

अदृष्टानुग्रहात्तच संबद्धार्थावबोधिका[4] इति ॥

अमूर्ता वृत्तिः कथं सर्पति। तत्राह ॥[5]

प्राप्तार्थप्रकाशलिङ्गाद्वृत्तिसिद्धिः ॥ १०६ ॥

व्यक्तम् ॥

वृत्तिः किं दीपज्वालेव भागरूपा गुणान्तरं वेत्यत्राह ॥

व्यक्तम् ॥

वृत्तिस्वरूपमाह ॥

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः, संबन्धार्थं सर्पतीति[6] ॥ १०७ ॥

---

१ AC इवोप॰। २ B omits ॰का॰। ३ Thus all three MSS.; cf. Aniruddha's commentary to 107। ४ Corrected; my MSS. have ॰बोधका। ५ This is the Avatârana to Aphor. 108। ६ a सर्पयतीति।

नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ ॥

नाप्राप्तार्थप्रकाशकत्वं यत्प्राप्तप्रकाशकत्वम्। श्रोत्रं वृत्तिद्वारेण शब्देन सह संबध्यते। काचादयस्तु स्वच्छत्वान्न चक्षुःप्रसारं प्रतिबध्नन्ति। दूरे च वृत्तिद्वारेण वस्तुग्रहणम्। यद्यप्राप्तेन[1] गृह्णाति, कुड्यव्यवहितवत् दूरत्वेनाप्राप्तेरविशेषादव्यवहितमपि न गृह्येतेति[2]। अथाप्राप्तेरपि गृह्णाति। अविशेषाज्जगदुदरवृत्ति सर्वं गृह्णीयादिति ॥

यदि प्रसारि चक्षुः, तैजसं तर्हीत्यचाह ॥

अप्राप्तानां विषयासंबद्धानां[3] प्रकाशकत्वमिन्द्रियाणां न, अप्राप्तेः असंबन्धात्। अथ व्याप्तत्वादिन्द्रियाणामस्त्येव संबन्धः। तत्राह 'सर्वप्राप्तेः'। तथा च जगदुदरवर्ति सर्वमेव गृह्णीयुः। तस्माद्विलक्षणः संबन्ध आवश्यक इति भावः ॥

स[4] च वृत्तिरित्याह ॥

न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥ १०५ ॥[5]

---

१ A यद्यप्राप्ते न। २ B गृह्येत। ३ C विषयासंबंधानां। ४ b सा। ५ Mahâdeva puts this Aphorism after 107।

तेजस इवापसर्पणाद्दूरे ऽपि प्रकाशकत्वात्तैजसमित्य-भिमानः। वस्तुतस्तु वृत्तिद्वारेण संबन्धात्तत्सिद्धेः प्रमेय-सिद्धेः ॥

वृत्तेरप्रत्यक्षत्वात्कथं वृत्तिसिद्धिरित्यत्राह ॥

तेजस इवापसर्पणात् दूरगमनात् न चक्षुः।

वृत्तयः प्रसरद्रूपाः स्फुरितास्तस्य[3] यत्र च।
अदृष्टानुग्रहात्तत्र संबद्धार्थावबोधिका[4] इति ॥

अमूर्ता वृत्तिः कथं सर्पति। तत्राह ॥[5]

भातार्थप्रकाशलिङ्गाद्वृत्तिसिद्धिः ॥ १०६ ॥

व्यक्तम् ॥

वृत्तिः किं दीपज्वालेव भागरूपा गुणान्तरं वेत्य-त्राह ॥

व्यक्तम् ॥

वृत्तिस्वरूपमाह ॥

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः, संबन्धार्थं सर्पतीति[6] ॥ १०७ ॥

---

१ AC इवोप॰। २ B omits ॰का॰। ३ Thus all three MSS.; cf. Aniruddha's commentary to 107। ४ Corrected; my MSS. have ॰बोधका। ५ This is the Avatârana to Aphor. 108। ६ a सर्पयतीति।

कार्यानुमेया वृत्तिस्तत्त्वान्तरमाहंकारिकं, अनियतः पदार्थो यतः। असंबद्धस्य[1] ज्ञानायोगात् तदर्थं सर्पति। तथा च

वृत्तयः प्रसरद्रूपाः स्फारिताक्षस्य[2] यत्र च।
अदृष्टानुग्रहात्तत्र [3]संबद्धार्थविबोधिकाः[4] ॥

कथममूर्ताया वृत्तेः सर्पणक्रियेत्यत्राह ॥

कार्यानुमेया वृत्तिस्तत्त्वान्तरमाहंकारिकं,[5] न भागो न वा गुणः। अनियतपदार्थवादिनो हि सांख्याः। वाचा संबद्धस्य[6] ज्ञानायोगात् सर्पतीति शब्दो यथानुभवकल्पनार्थः ॥

ननु[7] यदि चक्षुर्विषयपर्यन्तं गच्छति, तर्ह्यतिवेगवत्त्वात्तैजसं स्यात्। अत आह ॥[8]

न द्रव्ये[9] नियमस्तद्योगात् ॥ १०८ ॥

अनियतत्वात्पदार्थानां न द्रव्य एव[10] क्रियानियमः,

---

१ C संबद्धस्य। २ B स्फुरिताक्षस्य; cf. Mahâdeva's commentary to Aphor. 105। ३ A C संबंधार्था०। ४ Corrected; my MSS. have ०बोधकाः, cf. Mahâdeva's commentary to 105। ५ a ०न्तरं नाहंकारिकं। ६ a संबंधस्य। ७ b c तथा चाक्षुः instead of ननु। ८ This is the Avatârana to Aphor. 105। ९ द्रव्ये is read by Aniruddha and Mahâdeva only, Vijñâna and Nâgeśa have द्रव्य०; cf. Aph.[3] 398, note 3। १० C एवं।

किं तु यत्र प्रमाणं दृश्यते तदनुमन्यामहे। वृत्तौ च क्रिया दृष्टा, अन्यथा वस्तूपलम्भाभावात् ॥

देशभेदे भौतिकानीन्द्रियाणि भविष्यन्ति, यथा वृश्चिकदष्टस्य देशभेदे मरणमित्यत्राह ॥

द्रव्य एव क्रियेति न नियमः, किं तु तद्योगात् क्रियायोगात् क्रियानियमः। यत्र प्रमाणं दृश्यते तत्र क्रियेत्यर्थः[१]। वृत्तिक्रियायां च विषयप्रकाशः साधक इति भावः ॥

देशभेदे भौतिकानीन्द्रियाणि भविष्यन्ति, यथा वृश्चिकदष्टस्य मरणमिति। तत्राह ॥

न देशभेदे ऽप्यन्योपादानतास्मदादिवन्नियमः[२] ॥ १०९ ॥

स्वशरीर एव व्याप्तिर्गृहीता, आहंकारिकाणीन्द्रियाणि। तद्व्यभिचारे धूमो ऽप्यग्निं व्यभिचरेत् ॥

पाञ्चभौतिकमिति व्यपदेशे हेतुमाह ॥

अन्योपादानता भूतोपादानकत्वम्। इन्द्रियाणामिति शेषः। किं तु अस्मदादिवत् अस्मदादीन्द्रियाणामिव नियमः आहंकारिकत्वमेव। आहंकारिकाणीन्द्रियाणीति स्वशरीरे व्याप्तिर्गृहीता। तद्व्यभिचारे धूमो ऽप्यग्निं व्यभिचरेदिति भावः ॥

---

१ b inserts वृत्तिक्रियेत्यर्थः। २ Nâgeśa reads ०स्मदादाविव नियमः; cf. Aph.[3] 399, not 2।

यदि न पञ्चभूतोपादानकं शरीरं, तर्हि पाञ्चभौतिकमिति व्यवहारः कथम्। तत्राह ॥

निमित्तव्यपदेशात्तद्व्यपदेशः ॥ ११० ॥

पञ्चोपादानता निषिद्धा, न निमित्तता। तेन पाञ्चभौतिकमिति व्यपदेशः ॥

कति शरीरभेदा इत्यत आह[1] ॥

पञ्चभूतेति[2] निमित्तव्यपदेशात् तद्व्यपदेशः पाञ्चभौतिकेति नैमित्तिकव्यपदेशः। उपादानतैव निषिध्यते, न निमित्ततेति भावः ॥

शरीरभेदानाह ॥

ऊष्मजाण्डजजरायुजोद्भिज्ज[3]संकल्पज[4]सांसिद्धिकं चेति न नियमः ॥१११॥

ऊष्मजो दन्दशूकादिः। अण्डजाः पक्षिसर्पादयः[5]। जरायुजो मनुष्यादिः[6]। उद्भिज्जा वृक्षादयः। संकल्पजो

---

१ A B इत्यचाह। २ C पञ्चभूते। ३ A C ०जरायुज उद्भिज्ज०। ४ संकल्पज is read by Aniruddha only (cf. the commentary); the others have सांकल्पिक which reading is erroneously exhibited by my MS. B (but in the text only, not in the comm.)। ५ A C पक्षिसर्पाः। ६ A C omit the Visarga।

मन्त्रादिः। सांसिद्धिको मन्त्रौषधादिसिद्धः। चत्वार्येवेति न नियमः॥

देहे किं भूतं प्रधानमित्यत्राह॥

सांकल्पिकं मन्त्रादिशरीरं, सांसिद्धिकं मन्त्रौषधादिसिद्धिजमिति हेतोः चत्वार्यैवेति न नियमः॥

सर्वेषु पृथिव्युपादानमसाधारण्यात्तद्व्यपदेशः पूर्ववत्॥ ११२॥

सर्वेष्विति बाहुल्येन, 'सूर्यादिलोके तैजसं शरीरमि'ति श्रुतेः। तत्रापि बहुतरपार्थिवावयवावष्टम्भकत्वं[1], अल्पत्वे चानुपभोगात्[2]। पूर्ववदिति सर्वमेवोक्तम्॥

देहे प्राणदर्शनात्तस्य देहारम्भकत्वशङ्कामपनयति॥

सर्वेषु शरीरेषु पार्थिवमित्यसाधारणव्यपदेशात् सूर्यादिलोकस्थे तैजसादिशरीरे ऽपि पार्थिवावयवावष्टम्भकत्वमेव तेजआदेः[3], उपभोगे पार्थिवावयवानामेवोपयोगात्। तद्व्यपदेशः इतरभूतव्यपदेशः। पूर्ववत् निमित्ततयेत्यर्थः[4]॥

प्राणो वायुरिति मतं निरस्यति॥[5]

---

१ A C ॰पार्थिवावयवोपष्टम्भकत्वं। २ B अल्पं वान्यदनुपभोगात्। ३ b ॰वष्टम्भकमेव तेजः। ४ a नियमतयेत्यर्थः। ५ The Avatâraṇa is missing in a।

न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तितस्तत्सिद्धेः[१] ॥ ११३ ॥

भौतिकवायोर्देहारम्भकत्वं, न तु प्राणवायोर्भौतिकत्वं, 'प्राणात्सर्वमजायते'ति श्रुतेः। यावद्देहभावित्वे चारम्भकत्वभ्रमः[२]। सर्वेन्द्रियशक्त्या[३] प्राणो धार्यत इति यावदिन्द्रियं[४] तावत्तत्सिद्धिः प्राणधारणसिद्धिः[५] ॥

देहे[६] निष्पन्ने आत्माधिष्ठानं, आत्माधिष्ठिते वा देहनिष्पत्तिरिति[७] निर्णयमाह ॥

[८]देहजनकस्य वायोर्न प्राणत्वं, सर्वेन्द्रियशक्तितः सर्वेन्द्रियशक्तिरूपेण[९] तत्सिद्धेः प्राणसिद्धेः[१०]। सामान्यकरणवृत्तिः प्राण इति भावः ॥

भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसक्तेः[११] ॥ ११४ ॥

---

१ F. E. Hall's statement "Instead of तत्सिद्धेः, Vedânti Mahâdeva has तत्सिद्धिः" (Aph.[3] 403, note 2) is wrong; none of my three MSS. nor the commentary offers this reading। २ B वारम्भकत्वविभ्रमः। ३ B ०शक्तीः। ४ B यावद्धीन्द्रियं। ५ प्राणधारणसिद्धिः is omitted in A C। ६ A C लिङ्गदेहे। ७ A C देहलिङ्गनिष्पत्तिरिति। ८ b देहे। ९ a ०रूपे। १० bc omit प्राणसिद्धेः। ११ So reads Aniruddha only (A ०प्रवृत्तिः, C ०प्रसक्तिः); Mahâdeva ०प्रसङ्गः, Vijñâna and Nâgeśa ०प्रसङ्गात्; cf. Aph.[3] 404, note 1।

स्फुटम् ॥

प्रधानमूलत्वाच्छरीरस्य तद्द्वारेणैवाधिष्ठानं भविष्यतीत्यत्राह ॥

योनौ बीजमारभ्येत्यादिः[1]। अधिष्ठानात् संबन्धविशेषात्। पूतिभावः दुर्गन्धिता ॥

पुरुषस्य भृत्यप्रायं प्रधानम्। तद्द्वारैवाधिष्ठानमस्तु, न तु स्वातन्त्र्येण, बीजादौ। तत्राह ॥

भृत्यद्वारा[2] स्वाम्यधिष्ठितिर्नैकान्तात् ॥ ११५ ॥

जडे भृत्ये ऽवलम्बिनी[3] सर्वत्र [4]स्वस्थितिर्यथा, तथा जडस्य प्रधानस्याधिष्ठानान्न पूतिभावविरोधः[5] ॥

ब्रह्मरूपनिरूपणायान्येषां तुल्यरूपमाह ॥

प्रधानद्वारा पुरुषस्याधिष्ठितिः, नैकान्तात्, व्यभिचारात् सर्वत्र विद्यमानत्वादिति यावत्। [6]पूतिभावविरोधिनीति शेषः ॥

सुषुप्ति[7]दृष्टान्तेन मोक्षे दुःखाभावं वक्तुमाह ॥

समाधिसुषुप्ति[8]मोक्षेषु ब्रह्मरूपता ॥ ११६ ॥

---

१ a ०त्यादि। २ A C and one of F. E. Hall's MSS. (Aph.[3] 405, note 2) have भृत्यवर्गद्वारा। ३ Corrected; A ऽवलम्बिनि, C ऽवलम्बितेन, B वर्णितेन। ४ A C सुस्थिति०। ५ A C ०निरोधः। ६ c inserts न। ७ b सुप्ति०। ८ a ०सुषुप्त०।

ब्रह्मणा सह तुल्यरूपता, सर्वत्र बाह्यासंवेदनात्, न तु ब्रह्मरूपता ॥

ब्रह्मणः स्वरूपमाह ॥[१]

ब्रह्मरूपता[२] दुःखासंवेदनम् ॥

मोक्षे विशेषमाह ॥

द्वयोः सबीजत्वमन्यस्य[३] तद्धतिः ॥ ११७ ॥

द्वयोः समाधिसुषुप्त्योः सबीजत्वं संस्कारवत्त्वं, अन्यस्य मोक्षस्य बीजहानम् ॥

समाधिसुषुप्त्योर्दृष्टा निरुद्धवृत्तिकत्वात्कृतकृत्यता, न तु मोक्षस्येत्यत्राह ॥

सबीजत्वं पुनर्दुःखप्रयोजकसंस्कारवत्त्वम्[४] । तद्धतिः संस्कारहतिः ॥

मोक्षे प्रमाणमस्तीत्याह ॥

द्वयोरिव त्रयस्यापि[५] दृष्टत्वान्न तु द्वौ ॥ ११८ ॥

---

१ B offers, in place of this commentary and Avatâraṇa, the beginning of Vijñâna's comm. and his Avatâraṇa to Sûtra 117 । २ a b ब्रह्मस्वरूपता । ३ So reads Aniruddha only (A C सबीजमन्यस्य); Mahâdeva सबीजत्वमन्यत्र, Vijñâna and Nâgeśa सबीजमन्यत्र; cf. Aph.[3] 406, note 4 । ४ b °संस्कारत्वं । ५ "Vedânti Mahâdeva omits अपि" Aph.[3] 407, note 3 ।

त्रयस्यापि मोक्षस्यापि दृष्टत्वात् श्रुत्यनुमानप्रतिपादनात्कृतकृत्यता, न तु द्वौ सुषुप्तिसमाधी। सबीजत्वात्तयोः कृतकृत्यता गौणीति ॥

रागादीनां बन्धहेतुत्वात् किं वासनयेत्यत आह ॥

यथा सुषुप्तिः प्रत्यक्षसिद्धा[१] यथा वा समाधिरागमसिद्धः, तथा मोक्षो ऽपि शास्त्रसिद्धः। तत्रापि द्वौ सुषुप्तिसमाधी नात्यन्तपुरुषार्थौ सबीजत्वात्, किं तु मोक्ष एव निर्बीजत्वादिति भावः ॥

रागादीनामेव बन्धहेतुत्वात् किं संस्कारापरपर्यायवासनयेत्यत आह[२] ॥

वासनयानर्थख्यापनं[३] दोषयोगे ऽपि, न, निमित्तस्य प्रधानबाधकत्वम् ॥ ११९ ॥

न दोषादेव बन्ध इति वक्तव्यम्। वासनयानर्थख्यापनमवश्यं कर्तव्यम्। दोषाणामेव निमित्तस्य प्रधानस्य मुक्तौ बाधकत्वं वक्तव्यम्। मुख्यं च वासनेति ॥

इष्वादिक्षेपे वेगाख्यात्संस्कारात्[४]कर्म[५] कर्मणा च संस्कार इत्यनेके संस्काराः। तन्निषेधति[६] ॥

---

१ a inserts वा। २ a ०त्यत्राह। ३ A C न वासनाया आनर्थक्यख्यापनं; cf. Aph.[3] 409, notes 1, 2। ४ A योगा०। ५ C inserts पक्षे। ६ B इत्यनेकसंस्कारान्निरस्यति।

दोषयोगे ऽपि रागादियोगे ऽपि[१]। वासनयैव [२]अनर्थख्यापनं सौन्दर्यासौन्दर्य[३]ज्ञानम्। कारणमिति शेषः। अतो न रागादेरेव बन्धहेतुत्वं, किं तु निमित्तस्य रागादेरपि निमित्तस्य[४] वासनायाः प्रधानबाधकत्वं मोक्षबाधकत्वम्। तस्माद्वासनोच्छेद एव यतितव्यमिति भावः ॥

इष्वादिक्षेपे वेगाख्यसंस्कारात्क्रिया क्रियातस्य स इत्यनेकसंस्कारान्निरस्यति ॥

**एकः संस्कारः क्रियानिर्वर्तको[५], न तु प्रतिक्रियं संस्कारभेदा[६] बहुकल्पनाप्रसक्तेः ॥ १२० ॥**

एकसंस्कारपक्षे इषोर्न्नपात[७] इत्युक्तम्[८]। परिणामपक्षे च एकस्यैव मन्दतरादि[९]परिणामात्पात इति बहुकल्पनायां गौरवमिति ॥

एको विषयः, यत एका बुद्धिः, सत्सदिति प्रत्ययस्याविशेषा[१०]दित्यत आह ॥

---

१ a omits रागादियोगे ऽपि। २ a न ऽर्थ० instead of ऽनर्थ०। ३ b omits ऽसौन्दर्य०। ४ a omits रागादेरपि निमित्तस्य। ५ Corrected; A B a b c ०निवर्तको, C ०नुवर्तको; cf. Aph.[3] 411, note 1। ६ A C omit संस्कारभेदा। ७ B इषोर्नापात, C इषोर्न पात। ८ A C इत्ययुक्तं। ९ B नाना० instead of मन्दतरादि०। १० A प्रत्ययः स्यादविशेषा०, C प्रत्ययस्यातिविशेषा०।

स्पष्टम् ॥

नन्वेकस्मात्संस्कारादेका क्रिया ततः संस्कार इति लोके बुद्धिरस्ति । तत्राह ॥

न बाह्यबुद्धिनियमः ॥ १२१ ॥[१]

यथा सदिति प्रत्ययो ऽबाधितः, तथा घटपटादिप्रत्ययो ऽपि । सदिति प्रत्ययश्च[२] सामान्यविषयः । तस्मान्न बाह्यबुद्धावेकस्यैवेति[३] नियमः ॥

पाञ्चभौतिकं जीवशरीरम् । कतिभूतारब्धं स्थावरमित्यत्राह ॥

एकस्मादेव बह्व्यः[४] क्रिया इत्यपि बुद्धिरस्ति । तस्माल्लाघवादेक एव संस्कारः ॥

जङ्गमशरीरन्यायं स्थावरे ऽतिदिशति ॥

वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधा[५]दीनामपि भोक्तृभोगायतनत्वं पूर्ववत् ॥ १२२ ॥

---

१ Vijñâna and Nâgeśa combine this Sûtra with the following one । २ A C omit च । ३ B बाह्यबुद्धौ विवेक° । ४ a एकस्मादेशः । ५ A C °दा° instead of °धा°, the reading of B and of the other commentators ।

पूर्ववदिति भोगायतनत्वात्पाञ्चभौतिकम् । भोगायतनत्वं च जन्मान्तरीय[1]क्रियाविशेषात् 'जीवात्मान एव[2] स्थावराश्रयतामुपगच्छन्ती'ति श्रुतेः ॥

अत्र[3] स्मृतिरप्यस्तीत्याह ॥

वीरुत् झटिति वृक्षप्रसारिणी लता ॥

अत्र प्रमाणमाह ॥

स्मृतेश्च ॥ १२३ ॥

व्यक्तम् । तथा च

[4]अभिवादितश्च यो विप्र आशिषं न प्रयच्छति ।
श्मशाने जायते वृक्षो गृध्रकङ्कनिषेवितः ॥
शरीरजैः कर्मदोषैर्याति[5] स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥

वृक्षादीनां देहत्वे कर्माधिकारिता स्यादित्यत आह ॥

अभिवादितश्च ..... जातिताम्[6]इत्यादिस्मृतेस्तेषामपि शरीरत्वा[7]वगमात् ॥

---

१ B जन्मान्तर° । २ C एवं । ३ B अतः । ४ This reading which exhibits one syllable too much in the first Pâda is found in all my six MSS. । ५ A C शारीरैः कर्मभिर्दोषैर्याति । ६ Viz. the two S'lokas quoted by Aniruddha । ७ b c शरीरित्वा° ।

वृक्षादीनां शरीरत्वे[1] कर्माधिकारापत्तिं निरस्यति ॥

न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥१२४॥

जीवदेहा अपि चाण्डालादयो न कर्माधिकारिणः, किं पुनः स्थावरा इति, विशिष्टदेहस्य कर्माधिकारित्वात् ॥

देहभेदमाह ॥

अर्थी समर्थो विद्वानपर्युदस्तो ऽधिकारीति भावः ॥

देहभेदमाह ॥

त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः ॥ १२५ ॥

वीतरागाणां फलसंन्यासेन कर्मकरणात्कर्मदेहः। पश्वादीनामुपभोगदेहः। भोगिनां कर्माधिकारिणां कर्मोपभोगदेहः ॥

चतुर्थमनधिकारिणं[2] देहमाह ॥

वीतरागाणां फलन्यासेन कर्म कुर्वतां कर्मदेहः। पश्वादीनामुपभोगदेहः। भोगिनां कर्मिणामुभयदेहः ॥

चतुर्थं[3] देहमाह ॥

---

१ b c शरीरित्वे। २ B चतुर्थमधिकारिणं। ३ a चतुर्थ०।

न किंचिदप्यनुशयिनः[1] ॥ १२६ ॥

'विद्यादनुशयं द्वेषे[2] पश्चात्तापानुबन्धयोः' शाश्वतः। अनुशयिनो[3] योगिनो न किंचिदपि सर्वानधिकारात् ॥

नित्यां बुद्धिं निराकरोति ॥

अनुशयः प्रारब्धकर्मशेषः, सो ऽस्यास्तीत्यनुशयी, तस्य ज्ञानिन इत्यर्थः। न किंचिदपि कर्मेति शेषः। ज्ञानी[4] प्रारब्धशेषं भुञ्जानो न विधिनिषेधेष्वधिक्रियत इति भावः।

जीवसंबन्धिन्यो ज्ञानेच्छाकृतयो यद्यप्यनित्यास्तथापि क्वचिन्नित्या भविष्यन्तीत्यत आह ॥

न बुद्ध्यादिनित्यत्वमाश्रयविशेषे ऽपि वह्निवत् ॥ १२७ ॥

व्याप्तिस्वरूपस्य[5] व्यभिचारे सर्वत्रानाश्वासः। तथा चाश्रयविशेषे[6] चन्दनप्रभवस्य वह्नेरनुष्णत्वम् ॥

दूषणान्तरमाह ॥

यद्याश्रयविशेषः सेत्स्यति तथापि ज्ञानादयो ऽनित्या एव तत्र स्युः, स्वकीयज्ञानादिषु व्याप्तिग्रहात्। अन्यथा चन्दनप्रभववह्नेरनुष्णत्वमपि स्यादिति भावः ॥

---

१ A ॰नुशायिनः। २ B द्वेषः। ३ A B अनुशायिनो। ४ a ज्ञानि। ५ B व्याप्तरूपस्य। ६ B चाश्रयाविशेषे।

आश्रयो ऽपि नास्तीत्याह ॥

आश्रयासिद्धेश्च ॥ १२८ ॥

ईश्वरस्यासत्त्वात्, आत्मनां च धर्माभावात्, प्रकृतिधर्माणां परिणामित्वात्, महदादीनामनित्यत्वात्। न चानित्याश्रया धर्मा नित्या भवितुमर्हन्ति, तस्मान्नित्यबुद्धेराश्रयो नास्ति ॥

मणिमन्त्रौषधितपःप्रभावात्सिद्धिर्दृष्टा, न तु योगसिद्धयो दृष्टा इत्यत्राह ॥

ईश्वरस्य निराकृतत्वात् ॥

मणिमन्त्रौषधितपःप्रभावजसिद्धयो दृष्टाः, न तु योगसिद्धयः। तत्राह ॥

योगसिद्धयो ऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥ १२९ ॥

अणिमादिसिद्धिकायव्यूहपरपुरप्रवेशादयो दृष्टाः, ते च मन्त्रादिभ्यः क्षुद्रसिद्धिप्रदेभ्यो ऽसंभवन्तो योगमेवावलम्बन्त इति नापलपनीयाः ॥[1]

---

१ Mahâdeva copies this commentary literally, only putting भावः in place of नापलपनीयाः।

[१]पृथग्भूतानां चैतन्यादर्शने ऽपि संहताः शरीरभावमापन्नाश्चेतयिष्यन्तीत्यत्राह ॥

पृथग्भूतानां चैतन्यादर्शने ऽपि देहाकारपरिणतेषु स्यादित्यत्राह ॥

**न भूतचैतन्यं प्रत्येकानुपलब्धेः[२] सांहत्ये[३] च सांहत्ये[३] च ॥ १३० ॥**

यस्य स्वल्पा[४] शक्तिरस्ति, तस्य समुदायान्महच्छक्तिर्जायते, यथा तन्तूनां स्वल्पशक्तिमतां समुदायाद्गजबन्धनशक्तिर्दृश्यते। न तथा[५] भूतानां पृथक् चैतन्यं दृष्टं, येन सांहत्ये चैतन्योद्भवः स्यात्। संहतत्वाविशेषान्मृतदेहस्यापि चैतन्यप्रसङ्गः। तस्मादन्य एव चेतनः। उक्तमप्यर्थं [६]प्रसङ्गानुप्रसङ्गेन व्यवहितमिति स्मारितं, तेन न पुनरुक्तम्॥ सांहत्ये चेति वीप्साध्यायपरि[७]समाप्तौ॥

---

१ A C repeat पृथक्। २ So reads Aniruddha only; the text of Mahâdeva is that of Vijñâna: प्रत्येकादृष्टेः (thus also my MS. B); cf. Aph.[3] 418, note 2। ३ The other commentators insert ऽपि, and so does my MS. B; cf. the last clause of Aniruddha's commentary. Nâgeśa has स्वसांहत्ये, cf. Aph.[3] 418, note 3। ४ B यस्यामुख्या, after which there is a lacuna in this MS. extending as far as ॰शक्तिमतां। ५ B स्वल्प॰ instead of तथा। ६ A C प्रसक्तानु॰। ७ B C omit ॰परि॰।

यत्र हि प्रत्येकं स्वल्पा शक्तिर्दृश्यते, भवति तत्र संघाते ऽधिका शक्तिः, यथा तन्तूनां स्वल्पशक्तिमतां समुदायाद्गजबन्धनशक्तिः । न च तथा भूतानां पृथक् चैतन्यं दृष्टं, येन सांहत्ये चैतन्योद्भवः स्यात् । उक्तो ऽप्यर्थो व्यवहित इति पुनः स्मारितः ॥ वीप्साध्यायसमाप्त्यर्था ॥

---

इति कापिल[1]सांख्यप्रवचनसूत्रवृत्तौ परपक्षनिर्जया[2]ध्यायः पञ्चमः ॥ सकलशास्त्रार्थे कथिते परपक्षनिर्जया[3]नन्तरं तमेवार्थं संकलय्य तन्त्रन्यायेन वक्तुं षष्ठाध्यायारम्भः ॥

इति वेदान्तिमहादेवकृते सांख्यप्रवचनवृत्तिसारे पञ्चमो ऽध्यायः ॥ षष्ठस्तन्त्राध्यायः ॥

---

१ B श्रीकपिल° । २ A C °निर्णया° । ३ C °निर्णया° ।

तत्र प्रायशः पूर्वोक्त एवार्थं उपसंह्रियते। सूत्राण्यपि प्रायशः स्पष्टानि, कचिद्व्याख्यायन्ते॥

अस्त्यात्मा नास्तित्व[1]साधनाभावात्॥ १॥

स्पष्टम्। सामान्येनात्मन्यविप्रतिपत्तिः॥

विशेषनिरूपणमाह॥

देहादिव्यतिरिक्तोऽसौ[2] वैचित्र्यात्॥ २॥

देहाभेदपक्षे बाल्यकौमारयौवनवार्द्धकदेह[3]भेदादनेकात्मत्वप्रसङ्गः, मृते[4] देहे नाशात् तस्य[5] जन्मान्तरवैचित्र्यानुपपत्तिः। श्रुतिश्च

अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति सर्वं नहि तस्य वेत्ता
तमाहुरग्र्यं पुरुषं पुराणम्॥

हेत्वन्तरमाह॥

---

१ Mahâdeva reads नास्तित्वे; cf. Aph.[3] 419, note 2।
२ Mahâdeva omits ऽसौ; cf. Aph.[3] 420, note 3। ३ B °देहा°। ४ A C मृत। ५ B कस्यापि।

षष्ठीव्यपदेशादपि ॥ ३ ॥

मम देह इति ज्ञानमस्ति, भेदे च षष्ठी श्रूयते। स्थूलो ऽहमिति सामानाधिकरण्यमस्तीति[1] चेत्, न, देहे प्रत्युपभोगात्तन्निमित्तो ऽयं गौणः प्रत्ययः ॥

शिलापुत्रकस्य[2] शरीरमित्यभेदे ऽपि षष्ठी[3]श्रुतेर्न[4] भेद इत्यत्राह ॥

मम देह इति ज्ञानपूर्वकाच्छब्दाभिलापादित्यर्थः ॥

न शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥ ४ ॥

न, तत्र प्रत्यक्षेणैवा[5]भेदप्रतीतेः षष्ठी बाधितेति गौणः प्रयोगः। मुख्यसंभवाद्गौणो ऽत्र[6] नास्ति ॥

सुखोत्कर्षात्कृतकृत्यता स्यादित्यत आह[7] ॥

शिलापुत्रकस्य शरीरमिति–अत्र भेदव्यपदेशो गौणः, किं तु मुख्यः, धर्मिण आत्मनो ग्राहकेण शरीरादिभेदग्राहकेण मानेन प्रत्यक्षानु-

---

१ B omits इति। २ B ॰पुत्रस्य। ३ A षष्ठीति। ४ Mahâdeva reads शिलापुत्रकव॰; the remark Aph.[3] 421, note 3, is not confirmed by my MSS. of Aniruddha। ५ A omits एव। ६ A C ऽपि। ७ B ॰त्यत्राह।

मानशब्दरूपेण गौणत्वस्य बाधात्, शिलापुत्रकस्य[1] शरीरमित्यत्र तु प्रत्यक्षेणैवाभेदग्रहात्। कृशो ऽहमित्यादिस्तु प्रेम्णा तादात्म्याभिमान इति भावः॥

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता॥ ५॥

सुखोत्कर्षस्यापि क्षयित्वान्न कृतकृत्यता। अत्यन्तदुःखनिवृत्तिस्तु तथा, अपुनरावृत्तेः॥

सुखाभावस्यापि विद्यमानत्वात्पुरुषार्थत्वमित्यत्राह॥

न तु सुखोत्कर्षात्, तस्य क्षयित्वात्॥

यथा दुःखात्क्लेशः[2] पुरुषस्य, न तथा सुखादभिलाषः॥ ६॥

सुखे दुःखस्यावश्यंभावात्। यदि सुखे सति दुःखमवश्यं भवेत्, कः सुखमभिलषेत्[3]। तस्माद्दुःखबहुलत्वाद्दुःखनिवृत्तिरेव पुरुषार्थः॥

सुखस्य हेयत्वमाह॥

---

१ a शिलापुत्रक°। २ Mahâdeva and Nâgeśa read द्वेषः instead of क्लेशः; cf. Aph.[3] 423, note 2। ३ Corrected; A °मभिलषेन्न, C °मभिलषेन; in B there is a lacuna in this commentary।

यथा सुखे ऽपि दुःखात् दुःखावश्यंभावात् द्वेषः, तथा दुःखे ऽपि सुखात् अल्पात् लभ्यमानात्[1] अभिलाषो न। सुखं हि बहुल-[2]तरदुःखमिश्रितमिति न सुखे ऽभिलाष इति भावः ॥

ननु कस्यचिद्दुःखा[3]मिश्रितमपि सुखं भविष्यतीत्यत आह ॥

कुत्रापि को ऽपि सुखी न[4] ॥ ७ ॥

स्वयमेव चिन्त्यताम् ॥

प्रत्यक्षमेव वनितादीनां सुखहेतुत्वमित्यत्राह ॥

दुःखामिश्रिते[5] सुखे ऽमति[6] स्यादित्यादि[7] ॥

नन्वस्तु दुःखमिश्रणं, सुखं तु काम्यं भवेत्। अत आह ॥

तदपि दुःखशबलमिति दुःखपक्षे निक्षिपन्ते[8] विवेचकाः ॥ ८ ॥

---

१ b omits लभ्यमानात्। २ a बहुतर°, b बलतर°!। ३ b °ख° instead of °खा°। ४ This reading is peculiar to Aniruddha (B omits न); Mahâdeva has न कुत्रापि को ऽपि सुखीति, cf. Aph.[3] 424, note 1; b c, however, follow Vijñâna and Nâgeśa in omitting न। ५ All three MSS. insert ति। ६ a सुखीत्य, c सुखेत्य instead of सुखे ऽमति। ७ a c omit °त्यादि। ८ So read Aniruddha, Mahâdeva (a निच्चिपन्ति) and my MS. of Nâgeśa; Vijñâna निःच्चिपन्ते।

स्वर्गादीनामर्जने क्षयादौ च दुःखमिति स्वसंवेदनमेव प्रमाणमिति ॥

सुखमेव परमपुरुषार्थो, न त्वभाव[1] इत्यत्राह ॥

स्वर्गाद्यर्जनक्षयभयदुःखमस्त्येवेति भावः ॥

सुखस्यैव पुरुषार्थत्वं लोके दृष्टं, न दुःखाभावस्येत्यत आह ॥

सुखलाभाभावादपुरुषार्थत्वमिति[2] चेन्नैवं[3] द्वैविध्यात्[4] ॥ ९ ॥

[5]रागिणां सुखं, वीतरागाणां दुःखाभाव इति ॥

विशेषगुणोच्छित्तिर्मुक्तिरित्यत्राह ॥

रागिणां सुखं पुमर्थः, वीतरागाणां पुनर्दुःखाभाव इति ॥

निर्गुणत्वमात्मनोऽसङ्गादिश्रुतेः[6] ॥ १० ॥

---

१ A C नाभाव। २ A B C ॰पुरुषार्थमिति। ३ So reads Aniruddha only, the others चेन्न; cf. Aph.[3] 424, note 4। ४ B and one of F. E. Hall's MSS. have वैचित्र्यात्, see Aph.[3] 424, note 5। ५ A inserts the following S'loka which is found in C at the end of the commentary to Sûtra 10: तथा च,

दुःखाभावो ऽपि नावेद्यः पुरुषार्थतयेष्यते।
नहि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः॥

६ Thus only Aniruddha; Mahâdeva and Vijñâna ऽसङ्गत्वादिश्रुतेः, Nâgeśa ऽसङ्गत्वश्रुतेः, cf. Aph.[3] 425, note 3।

विशेषगुणनिषेधात्सामान्यगुणस्वीकारः। तथा चासङ्गादिश्रुतिविरोधः स्यात् ॥

यद्यसङ्गः पुरुषः, कथं धर्मात्[1]स्वर्गो ऽधर्मान्नरक इत्यत्राह ॥

विशेषगुणोच्छित्तिर्मुक्तिरिति पक्षे सामान्यगुणस्वीकार आपतेत्, स च श्रुतिविरुद्धः ॥

नन्वसङ्गत्वे पुरुषस्य धर्मात्स्वर्गो ऽधर्मान्नरकमिति कथम्। तत्राह।

परधर्मत्वे ऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥

प्रकृतिधर्मत्वे ऽपि प्रकृतिपुरुषाविवेकात्तच्छायापत्त्यात्मनः स्वर्गादिप्राप्तिरित्यभिमानः ॥[2]

अविवेकः किं सादिरनादिर्वेत्यत्राह ॥

अनादिरविवेको ऽन्यथा दोषद्वयप्रसक्तेः ॥ १२ ॥

यदि सादिरविवेको भवेत्, तदुत्पत्तेः पूर्वं[3] मोक्षः स्यात् तदुत्पत्तौ च बन्ध इति मुक्तस्य बन्ध इत्येको दोषः।

---

१ A C insert सुखं between धर्मात् and स्वर्गो। २ This commentary is simply copied by Mahâdeva, only तत् being omitted before छाया०। ३ B omits पूर्वं।

**अविवेकप्रागभावस्यापि विद्यमानत्वान्मुक्तिसिद्धावविवेकनाशार्थमनुष्ठानं व्यर्थमिति द्वितीयो दोषः ॥**

**अविवेको ऽनादित्वात्किं नित्यो ऽनित्यो वेत्यत्राह ॥**

यदि[1] सादिरविवेको भवेत्, तर्हि तदुत्पत्तेः पूर्वं मोक्षः स्यात् तदुत्पत्तौ च बन्ध इति मुक्तस्य पुनर्बन्धापत्तिरेको दोषः । अविवेकाभावस्यापि विद्यमानत्वान्मुक्तिसिद्धावविवेकनाशार्थं[2] यत्नो ऽनर्थकः स्यादिति द्वितीयो दोषः ॥

न[3] नित्यः स्यादात्मवदन्यथानुच्छित्तिः[4] ॥ १३ ॥

**नित्यो द्विधा, कूटस्थनित्य आत्मा, परिणामिनित्या प्रकृतिः । न द्वयमप्यविवेकः, किं त्वनित्य एव नाशात् । अन्यथा नित्यत्वे ऽनुच्छित्तिः । आत्मवदित्युपलक्षणं, प्रकृतिवदित्यपि[5] द्रष्टव्यम् ॥**

**अविवेकनाशः केनेत्यत्राह ॥**

आत्मवन्न कूटस्थनित्यः, नापि प्रकृतिवत्परिणामिनित्यः । अन्यथा नित्यत्वे ऽनुच्छित्तिः स्यात् ॥

प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥ १४ ॥

---

१ b यद्यपि । २ b ०नाशार्थे । ३ AC insert कूटस्थपरिणामि० । ४ "Nâgeśa has स्यादात्मवदुच्छित्तेः" Aph.[3] 427, note 3 । ५ A omits अपि ।

यथा ध्वान्तस्य नाशकः प्रकाश इति ॥

अत्र को नाशक इत्यत्राह ॥

यथा ध्वान्तस्य नाशकः प्रकाशः, एवमस्य ॥

अविवेकनाशकमाह ॥

अत्रापि प्रतिनियमो ऽन्वयव्यतिरेकात् ॥ १५ ॥

अव्यभिचाराद्विवेक एव नाशक इति ॥

किमविवेकाद्बद्ध आत्मा, अथान्यदपि बन्धकारण-मस्तीत्यत्राह ॥

विवेकख्यातिरिति[1] शेषः ॥

प्रकारान्तरासंभवादविवेक एव बन्धः ॥ १६ ॥

व्यक्तम् ॥

मुक्तेः कार्यत्वान्नाशे पुनर्बन्ध इत्यत्राह ॥

बन्धः संसारो ऽविवेक एवेति कार्यकारणयोरभेदोपचारात्। धर्मादिकं तु सहकारीति भावः ॥

मुक्तेः कार्यत्वान्नाशमाशङ्क्याह ॥

१ b विवेका॰। २ The statement of F. E. Hall that Mahâdeva has प्रकारान्तराभावाद॰ (Aph.[3] 429, note 1), is contradicted by my three MSS.

न मुक्तस्य पुनर्बन्धयोगो ऽप्यनावृत्तिश्रुतेः ॥ १७ ॥

श्रुतिश्च 'आत्मा ज्ञातव्यः प्रकृतितो विवेक्तव्यो न पुनरावर्तत' इति। [1]न्यायश्च 'भावकार्यस्य नाशात्', दुःखनिवृत्तिस्त्वभावरूपेति ॥

विपक्षे दोषमाह ॥

अपिशब्दाद्विवेकख्यात्या मुक्तिः समुच्चीयते। उभयत्राप्यनावृत्तिश्रुतेः 'आत्मा ज्ञातव्यः प्रकृतितो विवेक्तव्यो न पुनरावर्तत' इत्यादेः[2]। भावकार्यस्यैव नाशनियम इति भावः ॥

विपक्षे दोषमाह ॥

अपुरुषार्थत्वमन्यथा[3] ॥ १८ ॥

विवेकः[4] पुरुषार्थः ॥

दूषणान्तरमाह ॥

सुषुप्तिसमाधितुल्यत्वात् ॥

एतदेव स्पष्टयति ॥

---

१ A inserts नाशे। २ Corrected; b c इत्यादिः, a इत्यादि। ३ Mahâdeva (and one of F. E. Hall's MSS. of Aniruddha) transposes the two words: अन्यथापुरुषार्थत्वम्; cf. Aph.[s] 430, note 1; अन्यथा is missing in A C। ४ B पुनर्बन्धकः!।

अविशेषापत्तिरुभयोः ॥ १९ ॥

संसारिमुक्तयोर्बन्धयोगाविशेषात् ॥

[1]व्याध्यादयो योगान्तरायाः। तथा च पतञ्जलिः 'व्याधिस्त्यानसंशयप्रमादालस्या[2]विरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्ते ऽन्तरायाः। व्याधिर्ज्वरादिः[3], स्त्यानमकर्मण्यता, संशय उभयकोटिस्पृग्ज्ञानं[4], प्रमादः समाधावनवधानं, आलस्यं कायगुरुत्वं, अविरतिर्विषयतृष्णा, भ्रान्तिदर्शनं मिथ्याज्ञानं, अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं लब्धभूमेर्मनसि भ्रंशित्वम्। मुक्तौ[5] किमेषां ध्वंसमात्रं, धर्मान्तरप्राप्तिर्वेत्यत्राह ॥

उभयोः संसारमुक्तयोः ॥

मुक्तावन्तरायाणां ध्वंसमात्रं धर्मान्तरप्राप्तिर्वा। तत्राह ॥

मुक्तिरन्तरायध्वस्तेर्न परः[6] ॥ २० ॥

---

१ A C insert के योगान्तराया इत्यत्राह। २ B C ०स्य० instead of ०स्या०। ३ Corrected; the MSS. ०जैरादिः। ४ A ०कोटिस्पर्शज्ञानं। ५ B omits मुक्तौ। ६ A ०ध्वंसो न परः, C ०ध्वस्तेः पर्वंपरः! "Nâgeśa reads परा" Aph.³ 431, not 2।

धर्मान्तरपक्षे[१] कूटस्थत्वप्रच्यव[२] इति ॥

अभ्युपगम्याप्याह[३] ॥

अन्तरायध्वंस एव मुक्तौ, न परः। धर्म इति शेषः। धर्मान्तरपक्षे कूटस्थत्वव्याहतिरिति भावः। अन्तरायास्तु पतञ्जलिनोक्ताः ·······[४] ॥

धर्मान्तरयोगे ऽपि प्रौढिवादेनाह ॥

तत्राप्यविरोधः ॥ २१ ॥

भवतु धर्मयोगः, तथापि न काचित्क्षतिः। मुक्तावनावृत्तिरुक्ता, सा धर्मान्तरयोगे ऽप्यस्तीति ॥

श्रवणमननिदिध्यासनं किं सर्वपुरुषसाधारणं न वेत्यत्राह ॥

अनावृत्तिश्रुतेरिति भावः ॥

श्रवणमननिदिध्यासनानि सर्वैः[५] कार्याणीति न नियम इत्याह ॥

---

१ A धर्मान्तरत्वपक्षे। २ C omits ॰त्व॰। ३ B उपगम्याथाह। ४ Here follows the text just given by Aniruddha, from व्याधिस्त्यान॰ to ॰मनसि भ्रंशित्वं, with two deviations only: Mahâdeva puts इति at the end of the quotation (Yoga-sûtra I. 30) and says कायवृद्धिगुरुत्वं instead of the simple कायगुरुत्वं। ५ b c सर्वं॰।

अधिकारित्रैविध्यान्न नियमः ॥ २२ ॥

त्रिविधास्त्वधिकारिणो मृदुमध्याधिमात्राः । अधिमात्रस्य श्रवणमात्रान्मुक्तिः, मध्यमस्य द्वाभ्यां, मन्दस्य त्रिभिः। न सर्वं सर्वस्य ॥

पक्षान्तरमाह ॥

मृदुमध्याधिमात्रा अधिकारिणः। तत्राधिमात्रस्य श्रवणमात्रान्मुक्तिः, मध्यस्य द्वाभ्यां, मन्दस्य त्रिभिः ॥

एतदेवोपपादयति ॥

दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥

उत्तरेषां मन्दानां दार्ढ्यार्थं साधनत्रयमुक्तम्। श्रुतिरपि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चे'ति ॥

स्वस्तिकादीनां[1] मध्ये किमासनमनुष्ठेयमित्यत्राह ॥

उत्तरेषां मन्दानां मनननिदिध्यासने इति शेषः ॥

स्थिरसुखमासनमिति न नियमः ॥ २४ ॥

स्थैर्यार्थं सुखार्थं [2]चासनानुष्ठानं, तदेवास्तु व्यापकत्वादिति ॥

---

१ B स्वस्तिकानां। २ B C clearly वा॰ ।

एकाग्रतया विषयचिन्तनं ध्यानं, निर्विषयं वा[१] मनो[२] ध्यानमित्यचाह ॥

इति हेतोः । स्वस्तिकादीनां न नियमः ॥

समाधिलक्षणमाह ॥

ध्यानं निर्विषयं मनः ॥ २५ ॥

समाधावत्र ध्यानशब्द इति ॥

वृत्तिनिरोधतुल्यत्वे सुषुप्तिसमाध्योः को विशेष इत्यचाह ॥

ध्यानं समाधिः ॥

सुषुप्तितः समाधेर्विशेषमाह[३] ॥

उभयथाप्यविशेषश्चेन्नैवमुपरागनिरोधाद्विशेषः ॥२६॥

उपरागो विषयवासना । तन्निरोधः समाधाविति शेषः ॥

निःसङ्गत्वादात्मन उपरागाभावात्सर्वदा मुक्तिरित्यचाह ॥

---

१ C omits वा । २ B निर्विषयवासनो । ३ b समाधिविशे° ।
४ A C °वि° instead of °नि° ।

वृत्तिनिरोधस्त्वोभयत्र तुल्यत्वे ऽपि समाधावुपरागाख्यविषयवासना-निरोधाद्विशेषः ॥

निःसङ्गे ऽप्युपरागो ऽविवेकात् ॥ २७ ॥

प्रकृतिपुरुषाविवेकात्प्रकृत्युपरागेणात्मोपराग[१] इत्यभिमानः ॥

उपरागो ऽपि न तात्त्विक इत्यत्राह ॥

स्पष्टम् ॥

कीदृगुपराग इत्याह ॥

जपास्फटिकयोरिव नोपरागः, किं त्वभिमानः ॥ २८ ॥

तयोः संसर्गादुपरागो युक्तः। आत्मनस्त्वसंसर्गान्नोपरागः, किं त्वभिमानः आत्मन्यहंकाराध्यासादुपरागाध्यासः ॥

कथमभिमाननाश इत्यत्राह ॥

तयोर्हि संसर्गादुपरागो युक्तः। आत्मनस्त्वसंसर्गान्नोपरागः, किं त्वभिमानः ॥

ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः ॥ २९ ॥

---

१ B °आत्मनोपराग ।

आदिशब्दात्समाधिग्रहणम् ॥

एकदेशिमतमुक्त्वा स्वमतमाह ॥

तन्निरोधः विषयोपरागनिरोधः। आदिशब्दात्समाधिः ॥

ध्यानादीनामवधिमाह ॥

लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ॥ ३० ॥

लयः [1]सुषुप्तिः, विक्षेपो जागरितम्। तयोर्व्यावृत्त्याहंमानविनाशः[2] ॥

गुहादिस्थानेषु केषु ध्यानादयः कर्तव्या इत्यत्राह ॥

लयः सुषुप्तिः, विक्षेपः स्वप्नजागरिते। अवस्थात्रयव्यावृत्तिपर्यन्तं ध्यानादीन्यनुष्ठेयानि ॥

तत्र च स्थाननियमो नास्तीत्याह ॥

न स्थाननियमश्चित्तप्रसादात्[3] ॥ ३१ ॥

यत्र चित्तप्रसादो न भवति, तत्र न कर्तव्य[4]मनुष्ठानम् ॥

---

१ A C add स्वप्न०। २ B ०मानादिनाशः। ३ F. E. Hall ascribes the reading ०प्रसादाभावात् to Aniruddha, Aph.[3] 436, note 5; but this is not found in any of my three MSS.। ४ B तत्राकर्तव्य०।

अहंकारादीनामुपादानत्वमस्तु[1], कृतं प्रकृत्येत्यचाह ॥

यत्रैव चित्तप्रसादस्तत्र ध्यानाद्यनुष्ठेयम् । न नदीपुलिनादिनियमः ॥

प्रकृतेराद्योपादानतान्येषां कार्यत्वश्रुतेः ॥ ३२ ॥

अहंकारादीनां कार्यत्वश्रुतेः[2] तेषामपि कारणं प्रकृतिरित्यसकृदावेदितम् ॥

प्रकृतिपुरुषयोः पूर्वकालभावित्वाविशेषात्कः[3] कारणमित्यचाह ॥

अन्येषां महदादीनाम् ॥

नित्यत्वे ऽपि नात्मनो योग्यत्वाभावात् ॥ ३३ ॥

गुणवत्त्वसंसर्गित्वे[4] कारणयोग्यता, सा चात्मनि नास्तीति प्रकृतिः कारणम् ॥

आत्मनश्चेत्तृत्वाद्भोक्तृत्वादि[6] युज्यते, न जडस्य प्रधानस्येत्यचाह ॥

---

१ B ०पादानमस्तु । २ These first two words are omitted in A C । ३ A किं instead of कः, B ०भावित्वे कः, C ०भावित्वात्कः । ४ A C गुणसंसर्गित्वं । ५ All three MSS. have ०ष्ट० instead of ०त्तृ० । ६ A ०त्वात्कर्तृत्वादि ।

नात्मन उपादानता, गुणवत्त्वसंसर्गित्वाभावादित्यर्थः ॥

आत्मनः स्वत एव कर्तृत्वभोक्तृत्वे, किं प्रकृत्युपरागेणेति दूषयति ॥

श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥ ३४ ॥

व्यक्तम् ॥

तन्मात्राणां महाभूतकार्यत्वदर्शनात्कथं प्रकृतेः कारणत्वमित्यत्राह ॥

कुतर्कयुक्तं अपसदः दुष्टा सभा । तत्रात्मज्ञानं न युक्तं, श्रुतिविरोधात्, स्वतःकर्तृत्वादावनिर्मोक्षप्रसङ्गाच्च,

आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ।
नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥

इत्युक्तेः ॥

पारंपर्ये ऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥

यथा घटादेर्मृत्पिण्डकार्यत्वे ऽपि पारंपर्येण परमाणूपादानत्वं, तथात्रापीति ॥

प्रकृतिर्व्यापिका न वेत्यत्राह ॥

यथा घटादेर्मृत्पिण्डकार्यत्वे ऽपि पारंपर्येण परमाणूनामुपादानत्वं, तथा प्रधानस्येत्यर्थः ॥

सर्वत्र कार्यदर्शनाद्विभुत्वम् ॥ ३६ ॥

स्पष्टम् ॥

विपक्षे दोषमाह ॥

प्रधानस्येति शेषः ॥

विपक्षे बाधकमाह ॥

गतियोगे ऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥

गतिः क्रिया । तद्योगो यस्यास्ति तदव्यापकम् । प्रकृतेर्गतिमत्त्वे कार्यत्वं परमाणुवत्, न त्वाद्यकारणता[१] ॥

प्रकृतेरुपादानत्वे द्रव्यस्योपादानत्वात्तदन्तर्भावः स्यादित्यत्राह ॥

गतिः क्रिया । तत्प्रयोजका[२]विभुत्वयोगे ऽणूनामिव कार्यता स्यात् । अणूनां कार्यत्वे च पराक्रान्तमन्यत्र ॥

प्रसिद्धाधिक्यं प्रधानस्य, न नियमः ॥ ३८ ॥

प्रसिद्ध[३]द्रव्येभ्यो ऽधिकं प्रधानं, अनियतत्वात्पदार्थस्य । उपादानकारणता च न समवायिकारणता, किं तु प्रधानता[४], वैशेषिकसमवायस्यानभ्युपगमात् ॥

---

१ The clause beginning with प्रकृतेः is omitted in B २ b c ०क० instead of ०का० । ३ B प्रसिद्धे । ४ B omits प्रधानता, C has तद्रूपता instead ।

प्रकृतिः किं गुणात्मिका गुणधर्मिणी वा । अत्राह ॥
प्रसिद्धाधिक्यमिष्टं, यतो ऽस्माकं पृथिव्यादीनि द्रव्याणीत्यादिर्न नियमः ॥

सत्त्वादयो न प्रकृतिधर्माः, किं तु सत्त्वरजस्तमोरूपैव प्रकृतिरित्याह ॥

**सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥**

तादात्म्यात्[1] ॥

उपभोगार्थं प्रवृत्तिर्दृष्टा, न तु जडस्योपभोग इत्यत्राह ॥

सत्त्वादीनां सत्त्वरजस्तमसां तद्रूपत्वात् तादात्म्यात् ॥

निष्प्रयोजनप्रवृत्त्यभ्युपगमे मोक्षानुपपत्तेः[2] ॥

**अनुपभोगे ऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ॥ ४० ॥**

---

१ A C स्पष्टम् । २ This Avatâraṇa stands in a close syntactical connexion with the following Sûtra, or is even considered as part of it by Mahâdeva; the words are found in Vijñâna's Avatâraṇa, and form, with a slight alteration (॰नुपपत्तिः), Sûtra 40 in Nâgeśa's exposition; cf. Aph.[3] 442, note 2 ।

कृतव्याख्यानमेतत्तृतीये ऽध्याये 'प्रधाने'त्यादिसूत्रे ॥

प्रकृतेरेकत्वात्कथं सृष्टिवैचित्र्यमित्यत्राह ॥

कर्मवैचित्र्यात्सृष्टिवैचित्र्यम् ॥ ४१ ॥

उपादानाभेदे ऽपि निमित्तभेदेन भेदः, यथा सुवर्णाभेदे ऽपि मुकुटग्रैवेयकादि[1]भेदः ॥

कथं सृष्टिप्रलयावित्यत्राह ॥

स्पष्टं ॥

साम्यवैषम्याभ्यां कार्यद्वयम् ॥ ४२ ॥

साम्यात् प्रकृतेः सदृशपरिणामात् प्रलयः। वैषम्यात् प्रकृतेर्महदादिभावेन विसदृशपरिणामात्सृष्टिः ॥

प्रलयमाह[2] ॥

प्रकृतेः सदृशपरिणामात्प्रलयः। महदादिभावेन विसदृशपरिणामात्सृष्टिः ॥

विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४३ ॥

---

१ A °ग्रैवेयकटकादि°। २ A सृष्टिप्रलयमाह, C सृष्ट्युप्रत्ययमाह।

यथा लोको[1] बन्धमोक्षार्थं यतते, मुक्तबन्धश्च कृतार्थत्वादुदास्ते[2], तथा प्रधानमपि ॥

व्यापकत्वात्प्रकृतिपुरुषयोः संबन्धो ऽस्त्येवेति मोक्षे ऽपि भोगप्रसङ्ग[3] इत्यत्राह ॥

विमुक्तबोधात् 'विमुक्तो ऽयमि'ति बोधादिव[4] मुक्तं प्रति प्रधानस्य न सृष्टिः[5] प्रवृत्तिः। लोकवत्, लोके हि कश्चित्कस्यचिद्बन्धमोक्षार्थं यतते जाते च मोक्षे उदास्ते। तथा प्रधानम् ॥

नान्योपसर्पणे ऽपि मुक्तोपभोगो[6] निमित्ताभावात् ॥ ४४ ॥

भवेदेवं, यद्यन्यस्य प्रधानस्य उपसर्पणमात्रमुपभोगनिमित्तं स्यात्। न चैवं, किं तूपभोग्यनिमित्त[8] उपभोगः। स च मोक्षे नास्तीति ॥

एक एवात्मा। तथा च

एकमेव परं ब्रह्म सत्यमन्यद्विकल्पितम्।
को मोहः कस्तदा शोक एकत्वमनुपश्यतः ॥

---

१ C लोके। २ B कृतार्थत्वात्तदास्ते। ३ A omits ॰प्रसङ्ग। ४ A omits इव। ५ Twice in C। ६ A C विमुक्तो॰। ७ "Nâgeśa has the lection विमुक्तभोगो भवति." Aph.[3] 444, note 3। ८ A omits उपभोग्यनिमित्त, C has अविवेकनिमि॰; B C ॰निमित्तमु॰ which has been corrected by me into the reading given above।

एतदपाकरोति ॥

अन्यस्य बद्धस्य पुरुषस्य उपसर्पणे ऽपि तदर्थं सृष्टिप्रवृत्तावपि। निमित्ताभावात् अविवेकाभावात् ॥

पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥

एतत्प्रथमाध्याये जन्मादिसूत्रे वर्णितम्। तथा च

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।

अजो ह्येको जुषमाणो ऽनुशेते जहात्येनां[1] भुक्तभोगामजो ऽन्यः ॥

उपाधिभेदान्नानात्वं भविष्यतीत्यत्राह ॥

स्पष्टम् ॥

उपाधिश्चेत्तत्सिद्धौ[2] पुनर्द्वैतम् ॥ ४६ ॥

तत्सिद्धौ भेदसिद्धौ। उपाधिमिथ्यात्वे कुतो भेद[3]सिद्धिः। सत्यत्वे तु तेनैव पुनर्द्वैतम् ॥

दूषणान्तरमाह ॥

तत्सिद्धौ भेदसिद्धौ ॥

---

१ A C जह्रात्येकां। २ "Nâgeśa has उपाधिसिद्धिश्चेत्तत्सिद्धौ" Aph. 446, note 1। ३ B ऽभेद॰।

द्वाभ्यामपि[१] प्रमाणविरोधः ॥ ४७ ॥

सत्यासत्याभ्याम्। सत्यत्वे ऽद्वैतसिद्धान्तहानिः। असत्यत्वे कुतो नानात्वव्यवस्था ॥

नाद्वैतश्रुतिविरोधो द्वैतहानिश्चेत्यत्राह[२] ॥

द्वाभ्यां सत्यत्वासत्यत्वाभ्याम्[३]। उपाधेः सत्यत्वे ऽद्वैतबोधकप्रमाणविरोधः। उपाधेरसत्यत्वे तु तस्य[४] भेदाव्यवस्थापकत्वेन भेदग्राहिप्रत्यक्षादिविरोधः ॥

स्वमते त्वाह ॥



सामान्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ॥ ४८ ॥

अद्वैतश्रुतेः सामान्यपरत्वात् प्रशंसापरत्वाद्वान्यार्थत्वे न विरोधः। उपाधिसत्यत्वे च न द्वैतहानिरिति नास्ति विरोधः[५]। तस्मान्न पूर्वमात्मैकत्वं नोत्तरं च श्रुतिविरोधः। अद्वैतत्वे प्रमाणासत्त्वात् न तत्सिद्धिरिति[६] भिन्नो ऽस्तीत्यर्थः ॥

---

१ A द्वाभ्यामयं। २ B ०श्चेत्याह। ३ सत्यत्वासत्यत्वाभ्यां is missing in b। ४ a सत्य। ५ This clause is omitted in B। ६ A प्रमाणासत्यादात्मसिद्धिरिति, C प्रमाणासत्त्वासिद्धिरिति।

न प्रमाणाभावः, स्वप्रकाशमेव प्रमाणमस्तीत्यत्राह[1] ॥

पूर्वं आत्मैकत्वं उत्तरं उपाधिभेदान्नानात्वं च न, उपपत्त्यापि साधकाभावात्। किं तु स्वत एव सत्य आत्मभेदः, आत्मैक्यश्रुतिः आत्मत्वैकत्व[2]विषया, भेदप्रत्यक्षं त्वनौपाधिकसत्यभेदविषयमिति श्रुतिप्रत्यक्षाभ्यामविरोधात्[3] ॥

प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः[4] ॥ ४९ ॥

व्यक्तम्[5] ॥

दूषणान्तरमाह ॥

अद्वैतं कथं सिध्येत्, अनात्मनात्मना वा। नाद्य, जडत्वात्। अन्त्ये प्रकाश्यत्वप्रकाशकत्वयोर्विरोधः ॥

जडव्यावृत्तौ[6] जडं प्रकाशयति चिद्रूपः ॥ ५० ॥

---

१ B gives this Avatâraṇa in place of the next one दूषणान्तरमाह) and substitutes here the Avatâraṇa of Vijñâna। २ c आत्मैकत्व॰, a b ॰त्वं॰ instead of ॰त्व॰। ३ a adds प्रकाशकत्वयोर्विरोधात्, see the end of the next commentary। ४ A C कर्मकर्तृत्वविरोधः, Nâgeśa कर्तृकर्मविरोधः; cf. Aph.[3] 447, note 2। ५ B offers, instead of this word, the whole of Vijñâna's commentary with an addition from that of Nâgeśa। ६ Thus only Aniruddha, the others ॰व्यावृत्तौ; cf. Aph.[3] 448, note 2; the remark of

जडादन्यश्चिद्रूपो जडं प्रकाशयति। जडव्यावृत्तत्वेन प्रकाशरूपत्वं, न तु प्रकाशधर्मत्वमुक्तम्[१]। अत एव 'स एष नेति नेती'त्युच्यते[२], न तु विधिमुखतयेति॥ अथालौकिकप्रकाशरूपत्वम्। तत्र व्याप्तिग्रहणाभावा-द्दृष्टान्ताभावः॥ अथ योगिगम्यं तत्। असंप्रज्ञातयोगिनो ज्ञानचेष्टाभावाल्लिङ्गं नास्ति। संप्रज्ञातयोगिनश्च वचनचेष्टादि लिङ्गं, तेन च लौकिक एवार्थो[३]ऽनुमीयते। न च सोऽप्यनुभवरूपं[४] चैतन्यं प्रतिपादयितुं शक्नोति। तथा च

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
तथापि न तदाख्यातुं[५] सरस्वत्यापि शक्यते॥

एवमचेतनव्यावृत्तत्वाच्चेतन इत्युच्यते, न तु चितिसमवायश्चैतन्यरूपत्वं[६] वा, असंप्रज्ञातावस्थायां निरुद्धवृत्तित्वेनापि "[७]अलौकिकचैतन्यमि"ति व्यवहारान्यथा[८]-

---

F. E. Hall, in note 3, regarding a different reading of Mahâdeva in this Sûtra, is not confirmed by my MSS.।

१ A C जडव्यावृत्तत्वेन प्रकाशधर्मत्वे प्रकाशरूपत्वं वा वक्तुं युक्तं। २ C नेत्युच्यते। ३ B एवात्मा। ४ C ०रूप०, B ०रूपश्चै०। ५ B तदादातुं। ६ A ०रूपं०। ७ C लौकिक०। ८ Corrected; all three MSS. have व्यवहारादन्यथा०।

सिद्धेः। संप्रज्ञातावस्थायां तु वृत्तिज्ञानेनैव[1] 'चैतन्यमि'ति व्यपदेशः॥ एवं दुःखनिवृत्तावानन्दरूपत्वमिति प्रयोगः। यदि भावात्मकमानन्दरूपत्वं, तत्किं सुखमात्रे प्रयोगः। तथा सत्यज्ञातस्य सुखस्यादर्शनात्सुखं तज्ज्ञानं ज्ञाता चेति कुतो ऽद्वैतम्। अथ सुखविशेषे[2] आनन्दव्यपदेशः। सुखं च चैतन्यरूपं चेति न दृष्टम्। [3]अविवेचकानामेवैतत्। विवेचकास्त्वेवं मन्यन्ते, [4]दृष्टेनैव व्यावृत्तिरूपत्वेनो[5]पपत्ता[6]वदृष्टालौकिककल्पना गुर्वीति॥ यदि चैतन्यं न स्यात्, वस्तुसंवेदनमेव न स्यात्। मैवम्। यथालाबुवेणुतन्तूनां तथाविधसंयोगविशेषः[7] शब्दकारणं, न तु त्रयाणां संयोगादतिरिक्तं किंचिदस्ति, तथा पाञ्चभौतिकत्वाविशेषे[8] ऽपि जन्तुरूपेण परिणतानां पिण्डानां तथाविधात्संबन्धाच्चैतन्यमिति। प्रकाशत्वे चात्मनो ऽप्यंशत्वेन[9] जडत्वमिति॥

एवं च स्वप्रकाशश्रुतिर्बाधिता स्यादित्यत्राह॥

जडव्यावृत्तत्वमेव चिद्रूपत्वं, न तु प्रकाशधर्मत्वम्। अत एव 'नेति नेती'त्युच्यते, न विधिमुखेन। एवमानन्दताप्यनानन्दव्यावृत्तिरेव,

---

१ A °ज्ञानेन। २ A °विशेषः। ३ B सुविवे°!। ४ B adds एव। ५ B °रूपेनैवो°। ६ B °पत्तेर°। ७ B C °विशेषाः। ८ B °त्वाद्विशेषे। ९ B ऽप्यंशे, C ऽप्यंशेन।

न तु भावरूपं सुखं, अज्ञायमानसुखस्यादर्शनेन ज्ञानादीनामावश्यकत्वेन मुक्तावपि द्वैतापत्तेः। अलौकिकं सुखं मुक्तौ स्वप्रकाशं च तदित्यत्र मानाभावः ॥

नन्वानन्दरूपत्वे श्रुतिर्विद्यते। नेत्याह ॥

न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥ ५१ ॥

जडस्य त्रिगुणात्मकत्वेन[1] रागहेतुत्वात् प्रमाणादयश्च त्रिगुणत्वेन हेया इति। रागोच्छित्तिश्च कर्तव्येति। तत्सिद्धेः स्वप्रकाशश्रुतेरन्यथासिद्धेः ॥

जगतो मिथ्यात्वात्कथमन्यथासिद्धिरित्यत्राह[2] ॥

रागिणां हि सुखे रागः मुक्तौ च विरागः। ततश्च विषयवैराग्यायात्मनो ऽनानन्दस्यापि तत्सिद्धेरानन्दत्वकथनात्। श्रुताविति शेषः। वस्तुत आनन्दश्रुतिर्दुःखाभावे औपचारिकीति भावः ॥

जगत्सत्यत्वमाह ॥

जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात् ॥ ५२ ॥

दुष्टकारणजन्यं यथा पीतशङ्खज्ञानम्। बाधकं च 'नेदं रजतमि'ति ज्ञानम्। न चेदं तथा, प्रकृत्यादीनामदुष्टत्वात्। 'नेदं जगदि'ति प्रत्ययाभावाद्बाधकं च

---

१ B °त्मकत्वे। २ A C °रिति तत्राह।

नास्ति ॥ संक्षेपाज्जगदुच्यते । ऊर्ध्वं भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति[1] । अधो महातल[2]रसातलतलातलपाताल[3]सुतलवितलातला इति । मध्ये जम्बु[4]द्वीपः । तन्मध्ये सुमेरुः । तत्पूर्वादिचतुर्दिक्षु मन्दरगन्धमादनविपुलसुपार्श्वनामानो विष्टम्भपर्वताः । मेरुदक्षिणे भारतवर्षहिमालयपर्वतकिंपुरुषवर्ष[5]हेमकूटपर्वतहरिवर्षनिषधपर्वताः । मेरोरुत्तरे कुरुवर्षशृङ्गि[6]पर्वतहिरण्यकवर्षश्वेतपर्वतरम्यक[7]वर्षनीलपर्वताः । मेरुपूर्वं भद्राश्ववर्ष[8]माल्यवत्पर्वतः[9] । मेरुपश्चिमे केतुमालवर्ष[10]गन्धमादनपर्वतः । मेरोरध इलावृत[11]वर्षः । लक्षयोजनो जम्बु[12]द्वीपः । तद्वेष्टनेन तत्तुल्यो लवणसमुद्रः । तद्वेष्टनेन तद्द्विगुणः[13] शाकद्वीपः । तद्वेष्टनेन तत्तुल्य इक्षुरससमुद्रः । तद्वेष्टनेन तद्द्विगुणः कुशद्वीपः । तद्वेष्टनेन तत्तुल्यः सुरासमुद्रः । तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः । तद्वेष्टनेन तत्तुल्यो घृतसमुद्रः । तद्वेष्टनेन तद्द्विगुणः

---

१ A C transpose तपः सत्यं । २ Corrected; the MSS. महीतल॰ । ३ C omits पाताल, to reduce the number of hells to seven । ४ A C जम्बू॰ । ५ A omits ॰वर्ष॰ । ६ Corrected; the MSS. ॰शृङ्गी॰ । ७ A C ॰चम्पक॰ instead of ॰रम्यक॰ । ८ A ॰वर्षं । ९ Corrected; B ॰माल्यवतपर्वतः, A C माल्यवान्पर्वतः । १० A ॰वर्षं । ११ A इलावर्त्त॰ । १२ C जम्बू॰ । १३ A C always तद्द्विगुणः ।

शाल्मलिद्वीपः। तद्वेष्टनेन तत्तुल्यो दधिसमुद्रः। तद्वेष्टनेन तद्द्विगुणः क्रौञ्चद्वीपः। तद्वेष्टनेन तत्तुल्यो दुग्धसमुद्रः। तद्वेष्टनेन तद्द्विगुणः पुष्करद्वीपः। तद्वेष्टनेन तत्तुल्यः स्वादूदकसमुद्रः। लोकालोकपर्वतवेष्टनेन ब्रह्माण्डकटाहेन सर्वतः परिवृतं जगदिति ॥

पूर्वोक्तमपि शिष्यहिततया पुनः प्रतिपादयति ॥

दुष्टकारणजन्यं हि 'पीतः शङ्खः' इत्यादिज्ञानं, 'न पीतः शङ्खः' इत्यादिज्ञानबाध्यं च। तद्विषयो ऽसत्यः, जगति तु[१] न तथेति भावः ॥

प्रकारान्तरासंभवात्सदुत्पत्तिः ॥ ५३ ॥

प्रकारान्तरं च पूर्वमेव दूषितम् ॥

अहं करोमीति प्रत्यक्षात् 'किमहंकारः कर्ता, अथाहंकारशब्देनात्मोच्यते, स एव कर्ता[२]',त्यत्राह ॥

प्रकारान्तरं च पूर्वमेव निरस्तम् ॥

अहंकारः कर्ता, न पुरुषः ॥ ५४ ॥

पुरुषस्यापरिणामित्वात्। कृति[३]चैतन्ययोः सामानाधिकरण्यं च 'वृक्षस्तिष्ठती'त्यादौ व्यभिचरति ॥

---

१ a omits तु। २ C एवाकर्ते॰। ३ A न प्रकृति॰।

एककर्मक्षये[1] ऽपि यावद्देहभावित्वात्कर्मणो ऽपरापरकर्मोत्पत्तावनिर्मोक्ष इत्यत्राह ॥

अहंकारो बुद्धिः ॥

ननु सत्यामपि विवेकख्यातौ सुखादिभोगो दृश्यते, स कथम्। तत्राह ॥

चिद्वसाना भुक्तिस्तत्कर्मार्जितत्वात् ॥ ५५ ॥

अविवेकात्कर्मार्जनं, तेन च भुक्तिरिति। चिद्वसाना आत्मज्ञानावसाना[2]। [3]विवेकोत्पत्तौ नापरकर्मार्जनं, तदभावात्, नोपभोगः। कृतकर्मणो ज्ञानादेव नाशः। तथा च

यथैधांसि समिद्धो ऽग्निर्भस्मसात्कुरुते ऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति ॥

सातिशयत्वाच्चन्द्रादिलोकप्राप्तिरेव पुरुषार्थो भविष्यतीत्यत्राह ॥

चित् देहादिज्ञानं अवसानं अवधिर्यस्याः। यावद्देहादिभानं, तावद्भोग इत्यर्थः। तदिति प्रारब्धमुच्यते, बुद्धिस्थत्वात्। 'तस्य ताव-

---

१ A एककर्मापक्षेपे !, C एककर्मापेक्षे। २ B ०सानादात्मज्ञानविचारबलात्। ३ A अविवेको०। ४ B C अति०।

देव[1] चिरं, यावन्न विमोक्ष्ये[2] ऽथ संपत्स्ये' इत्यादिश्रुतेः[3] ज्ञानिनो ऽपि प्रारब्धकर्मफलभोग आवश्यक इति भावः ॥

चन्द्रादिलोके ऽप्यावृत्तिर्निमित्तसंभवात्[4] ॥ ५६ ॥

आदिशब्दाद्ब्रह्मलोकादयो ग्राह्याः ॥

गुरूपसन्नस्य[5] शब्दश्रवणादेव मोक्षो भविष्यतीति, किं मननादिनेत्यत्राह ॥

निमित्तमविवेकादि ॥

लोकस्य नोपदेशात्सिद्धिः[6] पूर्ववत् ॥ ५७ ॥

पूर्वोक्तमेवोक्तम्[7]। मन्दानां न श्रवणमात्रान्मुक्तिः, किं तु मननादिना। अनेन यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय उपलक्षणीयाः ॥

कथं तर्ह्युपदेशमात्रान्मुक्तिः श्रूयत इत्यत्राह ॥

लोकस्य मन्दाधिकारिणः उपदेशात् श्रवणमात्रात् न मुक्तिः, किं तु पूर्वं यथोक्तं तथैतद्बोध्यम्। मनननिदिध्यासने अपेक्षिते इत्यर्थः ॥

---

१ a c omit एव। २ Corrected; the MSS. विमोक्ष्ये। ३ a ०श्रुतिः। ४ So reads Aniruddha only, the others ०र्निमित्तसद्भावात्; cf. Aph.[3] 451, note 2। ५ A गुरूपसंपन्नस्य, B पुरूपसंपन्नस्य!। ६ So reads Aniruddha only, the others omit तत्; cf. Aph.[3] 452, note 1। ७ A C पूर्वमेवोक्तं।

तर्हि 'श्रुत्वा मुच्यत' इति कथमुपपद्यते । तत्राह ॥

पारंपर्येण तत्सिद्धौ विमुक्तिश्रुतिः[1] ॥ ५८ ॥

**प्रथमभावित्वाच्छ्रवणस्य पारंपर्येण कारणत्वसिद्धौ विमुक्तिश्रुतिः ॥**

**यथा च व्यापकत्वात्प्रकृतेर्जगत्कारणत्वं,[2] एवं[3] व्यापकत्वादात्मनः सर्वदेश उपभोग[4]प्रसङ्ग इत्यत्राह ॥**

तत्सिद्धौ श्रवणमात्रसिद्धौ विमुक्तिश्रुतिः[5] पारंपर्येण उत्तमाधिकारि[6]विषया वा ॥

गतिश्रुतिश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो व्योमवत् ॥ ५९ ॥

**यथा घटाद्युपाधियोगात् घटे गच्छति 'घटाकाशं गच्छती'ति ज्ञानं, तथा देहावच्छेदेन तद्गत्यात्मगतिरिति । कर्मवशाद्यत्र देशे उपभोगस्तत्र देहगमनादात्मनो भोगलाभः ॥ यद्यात्मा व्यापकश्चिद्रूपः, सर्वदा सर्वत्र सर्वार्थेषु समकालं ज्ञानं प्रसज्येत, न चैवं दृश्यते । तन्न । भवेदेवं, यद्यात्मा व्यापकस्वरूपेण वृत्ति-**

१ C विमुक्तश्रुतिः । २ B omits च व्यापकत्वात् । ३ B C omit एवं । ४ B भोग° । ५ C विमुक्तश्रुतिः । ६ C °कार° ।

ज्ञानं जनयति। न चैवं, किं तु देहादिपरिच्छिन्न एव। यथा सूर्यः प्रकाशस्वभावो ऽपि मेरोर्दक्षिणस्थो नोत्तरभागं प्रकाशयति, उत्तरस्थो न दक्षिणभागं, अव्यापकत्वात् ॥ यदा तु ज्ञानादिना दग्धकर्माशयत्वेन नष्ट[1]-देहादिसंघातो नीरजस्तमस्को व्यापको भवति, न तदा वृत्तिज्ञानं जनयत्यविकारित्वात्, किं तु स्वयमेव जगत्प्रकाशस्वरूपः[2] ॥ यथा चाकाशं व्यापकं प्रादेशिकधूमादिसंबन्धेन न मलिनं भवति, किं तु घटाद्यवच्छिन्नं सत् घटाद्युदरवर्ति सर्वं मलिनमित्यनुमन्यते[3]। तत्रापि[4] नाकाशं मलिनं, तस्य लेपाभावात्, किं त्वविवेचकानां[5] मिथ्या[6]भिमानमात्रं, घटभङ्गे तथाऽदर्शनात्। तथात्मा व्यापको, नास्य धर्मादिसंबन्धो, नापि ज्ञानं, किं तु शरीरावच्छेदेन मरुद्वह्नियोगवज्जीव[7]संबन्धेन मनोयोगात् जीवात्मेत्युच्यते। मनसाऽविनाभूता प्रकृतिरिति प्राकृतधर्माधर्मज्ञानाज्ञानसुखदुःखाद्यहंकारेन्द्रियतद्विषयजन्मादिमानिव लक्ष्यते। सात्त्विकांशेन प्रकृतेः स्वच्छत्वात् तत्प्रतिबिम्बित आत्मा

---

१ B दृष्ट॰। २ B ॰स्वभावः। ३ C ॰त्युच्यते। ४ A तथात्रापि। ५ A C तु विवेचकानां। ६ A C मिथ्यैवा॰। ७ C ॰योगाज्जीव॰, B ॰योगाद्वीज॰। ८ A प्रकृति॰।

प्रकृतिकर्तृत्वादिकमात्मन्यभिमन्यते। मिथ्याभिमानो ऽपि प्रकृतिप्रतिबिम्बिते आत्मनि, न त्वात्मनि, यथा निष्कम्पो ऽपि चन्द्रो जलप्रतिबिम्बितो जलकम्पात्कम्पत इति मिथ्याप्रत्ययः, यथा वा मुखं निर्मलमपि मलिनदर्पणे प्रतिबिम्बितं मलिनमित्यभिमन्यते॥ विवेचकास्तु कैवल्यदर्शिन 'आत्मनो ऽपरिणामादसंगत्वाच्च कर्तृत्वादिकं मिथ्ये'ति पश्यन्ति। यदा तु ध्यानपरिपाकवशाद्वासनाह्रासक्रमेण[1] मनोलयाद्वासनानाशाद्देहभङ्गे ऽन्यदेहानुत्पादः, तदा जीवात्मनो ऽपि परमात्मना सहैकत्वेन व्यापकत्वात्[2] क्व धर्माधर्मयोगः कर्तृत्वादिकं वा। किं त्ववाग्गोचरत्वे[3] ऽपरोक्षबोधानन्दरूपत्वमिति भण्यते, अन्यथा प्रतिपादयितुमशक्यत्वादिति॥

देहोत्पत्तेः पूर्वं निराश्रयत्वाद[4]धिष्ठानासंभवादुत्पत्त्यनन्तरमात्माधिष्ठानमित्यत्राह॥

व्यापकत्वे ऽप्यात्मन उपाधियोगात् देहादियोगात् भोगदेशकालयोगः। यथा व्योम घटादौ गच्छति गच्छतीव, तथात्मापि देहा-

१ B ध्यानपरिपाकरूपाद्वासनादाक्रमेण !। २ C व्यापकत्वेन, A omits the word। ३ A C ०चरत्वा। ४ B निराश्रयत्वाद०।

वच्छिन्नो गच्छतीवेति विशिष्टदेशकालसंबन्ध्युपभोगभाग्भवति कुतः। गतिश्रुतेः 'ऊर्ध्वं गच्छन्ति सत्त्वस्था' इत्यादेः ॥

अनधिष्ठितस्य पूतिभावयोगान्न[1] तत्सिद्धिः ॥ ६० ॥

व्यापकस्य नित्यस्य पूर्वपश्चाद्भावायोगाद्देहोत्पत्तिसमकालमेवाधिष्ठानान्न तत्सिद्धिः नानधिष्ठानसिद्धिः। ततश्च न[2] पूतिभाव इति ॥

अदृष्टवशादेव पूतिभावो न भविष्यतीत्यत आह ॥

न तत्सिद्धिः नानधिष्ठानसिद्धिः ॥

अदृष्टवशादेव पूतिभावो न भविष्यतीत्यत आह ॥

अदृष्टद्वारा चेदसंबद्धस्य तदसंभवाज्जलादिवदङ्कुरे ॥ ६१ ॥

निराश्रयस्यादृष्टस्यासामर्थ्याद्देहा[3]संबद्धत्वेन[4] न कार्यकरणं,[5] यथा जलस्य नाङ्कुरजनकत्वम्। आदिशब्दादग्नेर्ग्रहणम् ॥

किमाश्रया धर्मादयः कार्यजनका इत्यत आह ॥

---

१ Thus only Aniruddha, the others पूतिभावप्रसङ्गान्न; cf. Aph.[3] 453, note 3। २ B omits न। ३ C ०देहे६०। ४ B C ०संबंधत्वेन। ५ B ०कारणां।

बीजावस्थामारभ्यात्मा[1] नाधितिष्ठति, किं त्वदृष्टद्वारेति चेत्, न, असंबद्धस्यादृष्टस्य तदसंभवात् कारणत्वासंभवात्। अयमर्थः। अवश्यमदृष्टस्य तत्र संबन्धो वाच्यः, स च स्वाश्रयसंयोगविशेषादिरूप एवेति। जलादिवदिति दृष्टान्तः, यथा जलादि अङ्कुरजनकमपि बीजासंबद्धमङ्कुरं न जनयति[2] ॥

निर्गुणत्वात्तदसंभवादहंकारधर्मा ह्येते ॥ ६२ ॥

**निर्गुणत्वादात्मनः तद्धर्मत्वासंभवादेते धर्मादयो ऽहंकारधर्माः। कार्यकारणयोरभेदाद्बुद्धिधर्मा एवाहंकारधर्मा इत्युक्तम् ॥**

**किमात्मनः स्वरूपेण जीवत्वमन्यथा वेत्यत्राह ॥**

निर्गुणत्वादात्मनः तदसंभवात् तस्मिन्नसंभवात्। एते धर्मादयो ऽहंकारधर्माः। कार्यकारणयोरभेदाद्बुद्धिधर्मा एवाहंकारधर्मा इत्युक्तम् ॥

विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥

**स्वरूपेण[4] जीवत्वे कर्तृत्वाद्भोक्तृत्वात्[5] कौटस्थ्यहानिः।**

---

१ b c जीवा॰। २ c adds तद्वत्। ३ B तद्धर्मासं॰। ४ B स्वरूपेण। ५ C कर्तृभोक्तृत्वात्।

अन्वयव्यतिरेकाच्च । देहावच्छेदेन वाय्वग्निसंयोगा[1]-दिन्द्रियसंयोगेन विशिष्टस्य जीवत्वम् ॥

ऐश्वर्यशालित्वाज्जीवात्मैवेश्वरः, स एव जगन्निर्मास्यति । तथा च

ईश्वरः सर्वभूतानां हृद्देशे ऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥

इत्यत्राह[2] ॥

जीवत्वं कर्तृत्वभोक्तृत्वविशिष्टस्य देहादिविशिष्टस्य, न तु स्वरूपेण, कौटस्थ्यहानेः, अन्वयव्यतिरेकाभ्यां च, देहाभिमानिन एव कर्तृत्वभोक्तृत्वोपलम्भात् ॥

अहंकारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ॥ ६४ ॥

प्रमाणाभावादिति जगदुपादानज्ञानाभावात् । अव्यापकत्वादनेकेश्वरकल्पनापि स्यात् ॥

कार्यत्वाच्चेतन[3]कार्यत्वमप्यनैकान्तिकमित्याह[4] ॥

'प्रकृतेर्महान्, महतो ऽहंकारः' इत्युक्तो ऽहंकारः, तदभिन्नो यः

१ B वायुवह्नि॰ । २ इत्यत्राह is missing in B । ३ A C कार्यत्वाच्च चेतन॰ । ४ A ॰मित्यत्राह ।

कर्ता,[1] तदधीना कार्यस्य[2] तन्मात्रादेः सिद्धिः, नेश्वराधीना, कार्यत्वस्य चेतनकार्यत्वव्याप्यत्वे प्रमाणाभावात् ॥

एतदेव स्पष्टयति ॥

अदृष्टोद्भूतिवत्समानत्वम् ॥ ६५ ॥

**अदृष्टोद्भूतिवदकर्तृकत्वात्[3][4]। तस्यापि सकर्तृकत्वे[5] ऽदृष्टोद्भूत्यन्तरस्य सहकारित्वं, तस्यास्तस्या[6] अप्यन्यस्या इत्यनवस्था। सादित्वाच्च संसारस्य नानादितापरिहारः ॥**

**अहंकारस्य कारणत्वे किं महान्तं प्रत्यपि कारणत्वमित्यत्राह ॥**

न दृष्टः कर्ता यस्य क्षित्यङ्कुरादेस्तस्योद्भूतिः उत्पत्तिः। तस्यामिव समानत्वं चेतनकर्तृभावस्य। क्षित्यङ्कुरादौ हि न चेतनः कर्तास्ति, अनुपलब्धेः, तथा तन्मात्रेष्वपि ॥

महतोऽन्यत् ॥ ६६ ॥

**न स्वस्य कारणं कार्यं भवति ॥**

---

१ a तदकर्ता। २ a कार्यत्वस्य। ३ A अदृष्टोद्भूतवत्। ४ A C ॰दकर्तृत्वात्। ५ A C सकर्तृत्वे। ६ A C तस्याः only once।

स्वीया प्रकृतिः, स्वामी पुरुषः। तयोः संबन्धः किं स्वाभाविकः, अन्यनिमित्तको वा। स्वाभाविकत्वे स्वभावस्यानपायादनिर्मोक्ष इत्यचाह ॥

अहंकारस्य कार्यं महतो ऽन्यत्। नहि स्वकारणं स्वकार्यं भवति ॥

कर्मनिमित्तः प्रकृतेः स्वस्वामिभावो ऽप्यनादिर्बीजाङ्कुरवत् ॥ ६७ ॥

प्रकृतेरित्युपलक्षणं, पुरुषस्येत्यपि द्रष्टव्यम्। कर्मणश्च स्वस्वामिसंबन्धकारणत्वे,[1] विवेकात्कर्मक्षये स्वस्वामिभावसंबन्धाभावान्मुक्तिः।[2] अनित्यस्य सादित्वेन[3] नानादितापरिहारो, नित्यस्य पुनरस्तीति, अनादिरित्युक्तम् ॥

मतान्तरमाह ॥

पुरुषस्येति पूरणीयम्। स्पष्टमन्यत् ॥

अविवेकनिमित्तको[4] वा पञ्चशिखः ॥ ६८ ॥

स्वस्वामिभाव इत्यनुवर्तते ॥

---

१ B •कारत्वे। २ B स्वस्वामिसंबन्धात्। ३ B सादित्वात्।
४ Thus Aniruddha only, the others •निमित्तो; cf. Aph.[3] 459, note 2।

एकदेशिमतमाह ॥

अविवेकनिमित्त इति बहुव्रीहिः ॥

एकदेशिमतमाह ॥

लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ॥ ६९ ॥

लयनाल्लिङ्गमिति सूक्ष्ममातिवाहिकशरीरम्। यावत्स्थूलशरीरे सूक्ष्मशरीरस्य गमनमस्ति,[1] तावत्स्वस्वामिसंबन्धाद्बद्ध इत्यु[2]च्यते ॥

स्वमतमाह ॥

यावत्स्थूलशरीरे सूक्ष्मशरीरमस्ति, तावत्प्रकृतिपुरुषयोः स्वस्वामिसंबन्ध इति ॥

स्वमतमाह ॥

यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७० ॥

यद्वा तद्वेति कर्मक्षयाद्वा ज्ञानाद्वा[3]न्यतो वेति, स्वस्वामिसंबन्धोच्छित्त्या संसारोच्छित्तिः पुरुषार्थः ॥ तदुच्छित्तिः पुरुषार्थ इति वीप्साध्यायपरिसमाप्तौ ॥

---

१ A C गमनागमनमस्ति। २ A C omit इति। ३ A C ऽज्ञानाद्वा°।

एष सत्कार्यसिद्धान्तः पूर्वमेव निरूपितः ।
तन्त्रतः प्रतिपाद्यत्वान्न हि स्यात्पुनरुक्तता ॥

'यत् तत्' इत्यव्ययं[१] हेतौ । यतस्ततः स्वस्वामिभावो ऽस्तु प्रकृतिपुरुषयोः, तस्य तु बन्धहेतुत्वात् तदुच्छित्तिः पुरुषार्थ इति मम मतम् । वीप्साध्यायसमाप्त्यर्था ॥

---

इति कापिल[२]सांख्यप्रवचनसूत्र[३]वृत्तौ षष्ठोऽध्यायः ॥

समाप्तश्चायं[४] ग्रन्थः ॥

वृत्तिः कृतानिरुद्धेन[५] सांख्यसूत्रस्य धीमता ।
मूढसत्त्वविवेकाय, आत्मनश्च विमुक्तये ॥

इति वेदान्तिमहादेवकृते सांख्यप्रवचनसूत्रवृत्तिसारे तन्त्राध्यायः षष्ठः ॥[६]

---

१ C इत्यव्यय । २ A omits कापिल० । ३ C सूत्रस्य । ४ A समाप्तो ऽयं । ५ B वृत्तिकर्तानिरुद्धो ऽभूत् in spite of the following धीमता ! । ६ At the end of my MSS. of Mahâdeva, the 22 short Sâṃkhya-Sûtras are subjoined (see F. E. Hall, Preface to the Sâṃkhya-Sâra, 42 note) with the concluding remark इति सांख्यसूत्राणि कपिलप्रणीतानि च ।

# I. INDEX OF THE SÂMKHYA SÛTRAS,

*as read and numbered by Aniruddha.*

# II. INDEX OF WORDS,

## *containing philosophical terms and other rare or characteristic expressions.*

A=Aniruddha.
M=Mahâdeva.

A comma before A, M or AM indicates that the word occurs not only in the commentary but also in the Sûtra.

The introductions to the Sûtras are treated as part of the preceding commentary.

Nouns compounded with अ॰, अन्॰ which are not found in this index, may be looked for under the non-compound form.

Verbal quotations from published texts have been omitted.

# ADDITIONS AND CORRECTIONS.

II, l. 11. I have overlooked two passages of the Sâṃkhyapravachanabhâshya where Vijñânabhikshu refers to Aniruddha, the former of them on account of a misprint in Hall's edition. Vijñâna controverts, in his commentary to II. 32 (p. 124, l. 13), the explanation which a कश्चित् has given of Sâṃkhyakârika 28, pointing to Vâchaspatimiśra by this expression, and goes on saying, according to the edition (l. 16): स एव सूत्रार्थमप्येवं व्याचष्टे "The same explains, too, our Sûtra in the like manner." Now, this is impossible, because Vâchaspatimiśra has never commented on the Saṃkhyasûtras nor could have commented on them, as they did not yet exist at his time. Fortunately, a MS. of the Sâṃkhyapravachanabhâshya which the late Dr. Bhagvanlâl Indrajî has been kind enough to place in my hands, offers the correct reading सम एव च "A similar (commentator)" etc. That this similar commentator is Aniruddha, we learn from the following three lines in which Vijñâna quotes, though not verbally, Aniruddha's exposition of II. 32.

The second passage, above alluded to, where Vijñâna takes evidently notice of Aniruddha's commentary, is III. 9 (p. 132, l. 15): न तु सप्तदशमेकं चेत्यष्टादशतया व्याख्येयम्.

III, l. 15. The following two references of the Aniruddhavṛitti to the Sâṃkhyatattvakaumudî are to be added:

The S'loka, ending Aniruddha's commentary to I. 89 (p. 48, l. 15), is taken from Tattvak. to Kârikâ 27, and the latter half of Aniruddha's commentary to II.32 from the first lines of Tattvak. to Kârikâ 30.

P. VIII, 19, 23 read Sâyaṇa instead of Sâyana.
,, IX, 5 ऋनुवाद is damaged.
,, 11 15 read ०धर्मत्वे instead of ०धमत्वे.
,, 29, 10 ,, कर्मणाप्यतद० ,, ,, कर्मणाप्येतद०.
,, 15 ,, ऽयं ,, ,, ऽप्यथं.
,, 51, 21 ,, 'missing in' ,, ,, 'missing is.'
,, 57, 13 ,, 'अविवेका द्दे'ति ,, ,, 'अविवेकाद्देति.
,, 59, 16 ,, सौच्म्य त्तद० ,, ,, सौक्ष्म्यत्तद०.
,, 61, 10 ,, परमाणूनां ,, ,, परमाणुनां.
,, 66, 14 ,, ऽन्वेषणाद्धौ० ,, ,, ऽन्वेषणाद्धौ०.
,, 76, 4 ,, गुणास्तस्य ,, ,, गुणास्तस्य.
,, 96, 18 श्रुतिविरोधादि० is damaged.
,, 98, 9 add the following note to this Sûtra: Nâgeśa has प्रमाणदृष्टत्वात्, cf. Aph.[3] 205, note 3.
,, 115, 13 पुरुषार्थं is damaged.
,, 126 15 read 'two' instead of 'three.'
,, 152, 7 ऽप्युपभोगः does not appear clearly.
,, 156, 14 कर्मणो is damaged.
,, 164, 17 disjoin 'B omits.'
,, 188, 17 read ०द्धि० instead of ०धि०.
,, 189, 7 join अन्येषामपि.
,, 229, 21 read ०णोपनयन० instead of ०णोपनमन०.
,, 238 ,, २३८ instead of २९८ at the top.

---

